'स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि' इति वदन् जातानुशयो वदान्यान्तरमभ्यर्थयितुं जिगमिषति । अत्र 'धर्मार्थं क्षीणकोशस्य क्षीणत्वमपि शोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥' इति कामन्दकोक्तमर्थमतिगम्भीरया वाक्सरण्योपपादयति कविः 'स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति । पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥' इति श्लोके ॥

एकत्रार्थी विफलमनोरथो वदान्यान्तरं जिगमिषति; परत्र कोशागारः शून्यः; पृथिवी च निस्सारा; इति विचिन्त्य यथाकथंचित्परीवादं परिहर्तुकामः, कैलासनाथादर्थं निष्क्रष्टुमीहमानः, जानन्नप्यात्मनो बलम्, सत्याय मितभाषी भूत्वा 'यते साधयितुं त्वदर्थम्' इति प्रतिजानीते । इह कुबेरमभियास्यन्नपि सज्जीकृतं रथं प्रथमतः सविनयसभाजनं प्रदोष एव प्रयतो भूत्वाधिशयानो रघुः, समुद्रराजप्रसादनाय प्रथमं प्रायोपवेशं कुर्वन्तं रामभद्रं स्मारयति । आत्मज्ञेनालकाधिनाथेन सद्य एव कोशगृहस्य मध्ये कृतां हिरण्मयीं वृष्टिं श्रुत्वा समस्तमेव तद्द्रव्यंकौत्साय दिदेशेतीदम् 'त्यागाय सम्भृतार्थानाम्' इत्यस्य विशेषणस्य सार्थक्यं द्रढयति ।

अथ मरुद्भिः शीकरार्द्रैरानर्तितनक्तमाले नर्मदारोधसि भीष-

णानि वन्यमतङ्गजस्य चेष्टितानि यथावद्वर्ण्यमानानि पठितॄणामद्यापि भयोत्कम्पं जनयन्तीति भावुकाः, स्वयंवरमहोत्सवार्थं प्रस्थितवतः कुमारस्य मध्येमार्गं कुञ्जरदर्शनं श्रेयस्करमेवेति निमित्तज्ञाः, प्रियंवदस्य शापविमोचनमजस्यापि देवांशसंभवत्वं द्योतयतीति काव्यज्ञाः, प्रतिप्रियमकृत्वा स्वपदोपलब्धिर्नाभिलषिता प्रियंवदेनेति धर्मज्ञाः, गन्धर्वेणोपदिश्यमानमस्त्रमन्त्रमजो रेवायाः पवित्रं पय उपस्पृश्योदङ्मुखो जग्राहेति मन्त्रज्ञाश्च मोदन्ते ॥

अथ षष्ठसर्गे वर्ण्यमानस्य स्वयंवरमहोत्सवस्य पूर्वरङ्गतया शृङ्गाररसगर्भितानि पद्यानि रसभावनिरन्तरैर्मञ्जुलैर्वचोभिर्वन्दिमुखेन मधुरं प्रक्रम्य, अजस्य स्वयंवरमण्टपप्रवेशं सूचयन्, ततः किं वृत्तमिति पठितॄणां कौतूहलमुत्पाद्य पुष्पिताग्रया वृत्तसरण्या सर्गमिमं समकोचयत् ॥

**अथ षष्ठे**— शृङ्गाररसस्य परां काष्ठामधिरूढः कविरात्मानमपि क्वचिद्विस्मृत्य केवलं रसमयो बाभाति । वैदिकाग्रेसरो विद्वान्मल्लिनाथोऽपि किंचिदाकृष्टश्चमत्कृतस्तत्रतत्र आत्मनोऽपि रसिकत्वं दर्शयितुमुपक्रमते इत्यहो! महाकवेः कापि सरणिः ॥

अत्र स्वयंवरमण्टपस्थेषु भूपालकुमारेषु प्रधानतया

*सप्तैव राजानो विशेषतः सुनन्दया प्रस्तुता अपीन्दुमत्याश्चे-तस्यन्तरं न लेभिरे इति प्रतिपादयिष्यन्, पूर्वमेव 'शृङ्गारचेष्टा विविधा बभूवुः' इत्युपक्रम्य सप्तभिः श्लोकैः सप्तानामेव चेष्टादिक-मवर्णयदितीदं विमर्शकानां महान्तं हृदयोल्लासमङ्कुरयति ॥

ततश्च लीलारविन्दभ्रमणपरः पुष्पपुरावासीति, अंसवि-स्रस्तप्रावारकोत्कर्षणव्यापृतः उत्कृष्टवस्त्रैरभिख्यातानामङ्गानाम-धिप इति, प्रालम्बोत्कर्षणपर इति पाठेऽपि 'प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः' इति निर्देक्ष्य-माणः स एवेति, हेमपीठविलेखनव्यग्रपादः 'यत्नोल्लिखितो विभाति' इति वर्ण्यमान ऋद्धिमतीनामवन्तीनां नाथ इति, वामभुजमासनार्धे निवेश्य विवृत्तत्रिकं सुहृत्समाभाषणोद्यतः सहस्रबाहोर्योगिनः कार्तवीर्यस्यान्ववायसम्भवः कश्चिदरसिको माहिष्मतीपालक इति, केतकपत्रपाटको बृन्दावनाद्युपवनप्रान्ता-नां वारिविहारासक्तावरोधवधूस्तनचन्दनलेपैरापाण्डुरोदकया का-लिन्द्या विराजमानानां शूरसेनानां राजेति, रेखाध्वजलाञ्छनेन क-रेणाक्षानुदीरयमाणः 'ज्याघातरेखे सुभुजो भुजाभ्याम्' इति वर्ण्य-

* 1. मगध, पुष्पपुरी, परन्तप। 2. अङ्गराज। 3. अवन्ती, उज्ज-यिनी, महाकाल, शिप्रा। 4. माहिष्मती, रेवा। 5. शूरसेन, सुषेण। 6. महेन्द्रनाथ। 7. पाण्ड्यदेश, उरगपुरी।

मानो महेन्द्रनाथ इति, वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं करं किरीटे निक्षिप्यावस्थितो भूपः रत्नानुविद्धार्णवमेखलाया दक्षिणस्या दिशो वल्लभः पाण्ड्य इति चार्थात्सूच्यत इति तर्कस्यावकाशमुपलभ्य काव्यविदो नृत्यन्ति ॥

भूपालकुमाराणां कादाचित्कचेष्टादिकमधिकृत्य वैदिकाग्रेसरः श्रीमान्मल्लिनाथभट्ट एवमभिप्रैति— करस्थलीलारविन्दवत्त्वयाहमेवं भ्रमयितव्य इत्याशयेन कृतां चेष्टां दृष्ट्वा हस्तघूर्णकोऽयमपलक्षणक इति; प्रावारकोत्क्षेपणच्छलेनाहं त्वामेवं परिरप्स्ये इत्याशयेनाविष्कृतां चेष्टामवलोक्य गोपनीयं किञ्चिदङ्गेऽस्ति, ततोऽयं प्रावृणुत इति; पादाङ्गुलीनामाकुञ्चनेन त्वं मत्समीपमागच्छेत्यभिप्रायावेदकं व्यापारं विलोक्य भूमिविलेखकोऽयमपलक्षणक इति; त्वया वामाङ्गे निवेशितया सहैवं वार्ता करिष्ये इति सूचयन्ती चेष्टामालोक्य परं दृष्ट्वा पराङ्मुखोऽयं न कार्यकर्तेति; अहं तव नितम्बे एवं नखक्षतानि दास्यामीति भावमाविष्कुर्वन्तं तृणच्छेदकवत्पत्रपाटकोऽयमपलक्षणक इति; त्वया सहैवं रंस्य इति भावेनाक्षानुदीरयन्तम् अक्षचातुर्येण कापुरुषोऽयमिति; किरीटवन्मम शिरसि स्थितामपि त्वां भारं न मन्ये इत्यभिप्रायावेदकं शिरसि न्यस्तहस्तोऽयमपलक्षण इति च इन्दुमत्या मनस्याकलितम्—इति । अत्र यद्यपि प्रणयाग्रदू-

तीभिश्चेष्टाभिर्नृपाणामाशयाविष्करणं स्वरसतया प्रतिभाति; अथापीन्दुमत्या वैदिकसरणिमाश्रित्य शृङ्गारचेष्टा अपि हस्तघूर्णकत्व भूमिविलेखकत्व तृणच्छेदकत्वादिस्मृत्युक्तनिन्द्याचारतया दृष्टा इत्यभिप्रायवर्णनं नातीव हृदयंगमं सहृदयानाम् । इन्दुमत्याश्च तदिदं शुष्कतापसीत्वमारोपयत्सत , तेषां राज्ञामवरणे सौभाग्यन्यूनताया न कुत्रापि कारणत्वम् , परं भिन्नरुचित्वं भवितव्या चेत्याद्याशयावेदिनीभिः * कालिदासोक्तिभिर्विसंवदति चेति विस्मृतवानिव पदवाक्यप्रमाणतत्त्वज्ञो महामहोपाध्यायः ॥

इह कवि· शूरसेनदेशाधिपस्य वर्णनावसरे स्वेन दृष्टपूर्वाणि कालिन्दीपरिसरारण्यानि अधिष्ठितपूर्वाणि गोवर्धनशि-

---

*1 . समीरणोत्थेव तरङ्गलेखा पद्मान्तर मानसराजहंसीम् ॥

2. नासौ न काम्यो न च वेद सम्यग्द्रष्टु न सा भिन्नरुचिर्हि लोकः ।

3 बबन्ध सा नोत्तमसौकुमार्या कुमुद्वती भानुमतीव भावम् ।

4. तस्याः प्रकाम प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥

5. सा व्यत्यगादन्यवधूर्भवित्री ॥

6 तस्मादपावर्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात् ।

7. स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तर चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥

लातलानि अनुभूतपूर्वाणि बृन्दावनमृदुप्रवालानि चानुस्मरन्, द्रुतीभूय औचित्यमपि विस्मृत्य सुनन्दामुखेन इन्दुमत्याः पौत्रेण शत्रुघ्नेन लवणासुरं हत्वा कालिन्दीतटे निर्मास्यमानां [1]मधुरां तदानीन्तनत्वेन वर्णयन्, स्वयंवरमण्टपस्थ सुषेणं नाम राजानम् आगामिनि युगेऽवतरिष्यता कृष्णेन सहोपमिमानो गोवर्धनकन्दरासु सुचिरं भ्रान्त स्वान्त वशीकर्तुं न शशाकेत्यहो! रसस्याप्याश्रयाशिता ॥

महाकवेरस्य काले आर्यावर्ते कोसलविदर्भाङ्गवङ्गावन्तीहेहयशूरसेनकलिङ्गाभिख्यानि राष्ट्राणि, दक्षिणस्यां दिशि पाण्ड्याश्च प्रसिद्धानीत्यनुमातुं शक्यते। तथा चेन्मगधावन्तीहेहयशूरसेनदेशाश्चतुर्थे सर्गे कथं न नामतो निर्दिष्टा इति विचारणीयम्। अत्र हि उत्तरकोसलेभ्यः प्रस्थाय, गहनान्यरण्यान्यतीत्य, वङ्गान्विजित्य, महोदधेर्वेलातटेनैव जैत्रयात्रां कृत्वा, ततश्च सह्याद्रिमतिक्रम्य, पश्चिमोदधितीरमासाद्य, तेनैव पथा भारतवर्षं प्रदक्षिणीकृतवतो रघोर्मार्गे तानि राष्ट्राणि न विद्यन्ते इति नामतो न निर्दिष्टानीत्येतत्साम्प्रतमेवेति भारतवर्षीयरेखालेख्यावलोकनेन स्पष्टीभवति। अन्यच्च, प्रायेण मुनिवृत्तिमा-

1. उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः।
निर्ममे निर्ममोऽर्थेषु मधुरां मधुराकृतिः॥ सर्ग. xv; श्लोक.28.

श्रितवता रघुणा आत्मना सहैव राज्यकार्यनिर्वहणे नियुक्तोऽजो द्वेधा विभक्तां भुवो धुरमेकत उवाहेति 'तामेकतस्तव बिभर्ति गुरुर्विनिद्रस्तस्या भवानपरधुर्यपदावलम्बी ।' इति पञ्चमे सर्गे, 'गुर्वीं धुर यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति' इति षष्ठे च द्विरुक्तवतः कवेः, केचन राजानो रघुणा पराक्रमेण जिताः, केचनाजेन सौभाग्यातिशयेन वीर्येण चेति वर्णयितु-मन्तरमुपलब्धव्यमित्याशय इति विदांकुर्वन्तु विमर्शकाः । अपरं च, पूर्वं कदाचित्कलिङ्गानां प्रधाननगरं महोदधेस्तीर एवासीदिति 'प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ।' इत्यादिनावगम्यते । इयं च पुरी इदानीं केवलं कथाशेषा संजातेत्यहो! भङ्गुरता स्थावराणामपि। कुत्रासीदिदं पट्टणमिति कौतूहलमारुह्य विचारणायाम्, महोदधेस्तीरे सुप्र-सिद्धस्य श्रीकूर्माख्यदिव्यक्षेत्रस्य नातिदूरे कलिङ्गपट्टणमित्य-भिख्यया कश्चन जनपदो भासते । तत्र च कलिङ्गनाथेन कालीमनुदिनं पूजयतार्चितानि स्वर्णपुष्पाणि जातिप्रसूनाकारा-ण्यद्यापि वर्षासु यदृच्छया भूतलादुपलभ्यन्त इति सांयात्रिकाणां प्रवादः। इयं नगरी कालेन जीर्णप्रायासीत्। प्रासादवातायनादिकं च सर्वमपि सिकतात्मना परिणतमभूदिति प्रतीमः । अनेन च 'सा रम्या नगरी महान्स नृपतिः सामन्तचक्रं च तत्पार्श्वे तस्य

च सा विदग्धपरिषत्ताश्चन्द्रबिम्बानना: । उद्वृत्तः स च राजपुत्र-निवहस्ते वन्दिनस्ताः कथाः सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥' इति भर्तृहरिसूक्तिमनुस्मरिताः पार्थिवानां परिणामनिःसारतामनुबोधिताश्च नितरां दूयामहे ॥

एवं स्वयंवरमहोत्सवम् इक्ष्वाकुवंशप्रभवस्याजस्य कण्ठे वरणमालिकासङ्गं चानुवर्ण्य, 'शशिनमुपगतेयं कौमुदी मेघमुक्तम्' इति वधूवरयोरानुगुण्यं जन्मान्तरीयं कंचिदान्तरं सम्बन्धं च विवृण्वन्, क्षितिपतिमण्डलस्य हृदयशल्यनिर्देशव्याजेन उत्तरसर्गस्य कथां सूचयन्, 'कुमुदवनप्रतिपन्ननिद्रमासीत्' इति क्षितिपतिमण्डलस्य संमोहनास्त्रबलाद्भाविनीं निद्रां च ध्वनयन्, सर्गमिमं च न्यमीलयदित्यहो! माधुर्यमनितरसाधारणं महाकविभणितीनाम् ॥

**अथ सप्तमे**—प्रथमं शृङ्गारः, तदनु वीरः, ततश्च शान्तिः प्रतिपाद्यते । तत्रादौ कविः, वधूवरयोः पुरप्रवेशवर्णनावसरं प्राप्य 'प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ।' इति पूर्वमेव संक्षेपतः प्रस्तुतमाशयं रसभावैः स्वभावोक्तिमाश्रित्य विवृण्वन्, राजदम्पत्यालोकनतत्पराणां कुण्डिनपुरसुन्दरीणां चेष्टितान्यालापांश्च मधुरमधुरं वर्णयन्वशीकरोति मानसम् ॥

तदनु वैदिकसरणिमाश्रित्य पाणिग्रहणविधिं मधुपर्कप्रदाना-

दारभ्य लाजहोमान्तं कथयन्नपि, अन्तरान्तरा जायापत्योरपाङ्ग-प्रतिसारितानामन्योन्यलोलानां विलोचनानां संकोचविकासादिवर्णनेन 'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः' इति सूत्रकारवचनमनुस्मारयन्नपि, 'तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुर-कर्णपूरम् । वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद्बभूव ॥' इति गृह्यसूत्रकाराणामापस्तम्बादीनां नैष्ठुर्यमरसिकत्वं च प्रदर्श्य किंचिदिव विषीदति रसिकाग्रणीरसौ महाकविः ॥

अथासूयाविष्टचेतसां राज्ञामजेन समरे पराजयं वीरस्वर्गमुपयातानाममर्त्यभावेऽप्येकाप्सरोनिमित्तकं विवादं च वीररसमाश्रित्य वर्णयन्, इन्दुमत्या मुग्धावस्थां स्वाभाविकलज्जादिकं पतिप्रेम च द्वित्रैः पदैर्निपुणमभिव्यञ्जयन्, विजयिनं श्लाघ्य-जायासमेतं कुमारमुपश्रुत्य रघुणा शान्तिमार्गाश्रयणे मतिः कृतेति मालिन्या सर्गमवासाययत् । अत्र विवाहानन्तरमेव श्वशुरकुलं नीयमानायां वध्वाम्, मध्येमार्गं महासमरदर्शनमनेकेषां वर्मभृतां तनुत्यागः, 'रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः' इत्यादि च दम्पत्योर्भाविदुःखं सूचयतीति मन्यन्ते निमित्तज्ञाः । एतदपि मनोरममेव सहृदयानाम् ॥

**अथाष्टमे**—करुणरसं प्राधान्येन शृङ्गारं च तदङ्गतया वर्णयन्कविः पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान्करोति ।

समरविजयलक्ष्मीमिव मूर्तिमतीमिन्दुमतीमनवद्याङ्गीं संप्राप्याऽनन्यमनस्कः प्रणयाभिभूतश्चान्तस्तरलतायाः परां कोटिमारूढ पितुराज्ञातिलङ्घनभीरुतया वसुधापालनमङ्गीकुर्वन्कुमारः 'क्षिते केवलं शब्दपतिः' भूत्वा कथंचिद्राष्ट्रव्यापारादिकं निरवर्तयत्। आत्मनस्तरलतां जानन्नेवाश्रुमुखोऽरण्यसमाश्रयोन्मुखं पितरं रघुं प्रणिपत्यात्मनोऽपरित्यागमयाचत। सोऽपि प्रेमार्द्रहृदयः पुराद्बहिस्तुरीयमाश्रममाश्रित्य वार्धके मुनिवृत्त्या कंचन कालं निनाय। अत्र कविर्यतिपार्थिवलिङ्गधारिणोर्द्वयोरपि पितापुत्रयोः पावनीं स्थितिमेकैकेन श्लोकार्धेन निपुणं वर्णयन्, प्रजारक्षणवदात्मानुशासनमपि न सुकरमिति ज्ञापयन्, स्वस्य योगशास्त्रपरिचयमपि सम्यगाविष्करोतीत्यहो! सर्वपथीना मतिः॥

अत्र वैदिका ब्राह्मणेतरवर्णानां तुरीयाश्रमाश्रयणं स्मृतिकारैरभ्युपगतं वा, न वेति विचारयन्ति। मल्लिनाथसूरिस्तु महाकविसूक्तिषु सबहुमान इव त्रिदण्डधारणं विना तुरीयाश्रमाश्रयणं सूत्रकाराशयानुरोध्येवेति व्याकुर्वन्कविपक्षपातिषु परिगणितमात्मानं नावबुध्यत इव॥

ततश्च रघुरजव्यपेक्षया काश्चन समा गमयित्वा योगसमाधिना तमसः परमव्ययं पुरुषमापदिति कथयन्, 'न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः।' इति आदावेव रघोरपदा-

नं मनसि निवेश्य 'योगेनान्ते तनुत्यजाम्' इति प्रयुक्तमुत्तमं विशेषणमपि सार्थक्यमगमयदितीदं 'अपारे खलु संसारे कविरेकः प्रजापतिः ।' इत्यभियुक्तोक्तरीत्या कवेरनितरसाधारणं संकल्पदाढर्यं विशदयति ॥

एवं कविः सर्गाष्टके रघोरितिवृत्तं वर्णयन्, सर्वेष्वपि सूर्यवंश्येषु तस्मिन्नेवान्यादृशं माहात्म्यमनुभावयन्, रघौ श्रीरामभद्रापेक्षयाप्यधिकमात्मनः पक्षपातं विशदयति । तद्गुणांश्चावसरेषु पुनः पुनरुद्गृणाति । तथा च स्वयंवरमहोत्सवानुवर्णनावसरे रघोर्महिमानं श्लोकद्वयेन साभिनिवेशमभिव्यनक्ति 'पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता। चतुर्दिगावर्जितसंभृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ आरूढमद्रीनुदधीन्वतीर्णं भुजङ्गमानां वसतिं प्रविष्टम् । ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥' इति । किंनिमित्तमिदं गौरवं रघौ श्रीरामभद्रापेक्षयापीति यथामति विमर्शनीयं सुधीभिरिति नात्र पर्यालोच्यते ॥

सम्यङ्निरूप्यमाणे, आद्ये सर्गद्वये रघोर्जनयितारौ प्रस्तुत्य, तृतीयादारभ्याष्टमावधिना सर्गषट्केन रघोरपदानं विस्तरत उपवर्ण्य, श्रीरामभद्रचरितमप्यन्येन षट्केन दशमादारभ्य पञ्चदशावधिना उपक्रंस्यमानः, रघोस्तनुत्यागानन्तरमेव इन्दुमती

'वीरमजीजनत्सुतम्।' 'दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः।' इति दशकण्ठारिपदेन स्वाशयमभिव्यञ्जयन्, दशकण्ठारिगुरोः कथामपि सर्गद्वयेनादौ वर्णयतीति तर्कस्याव-काशमुपलभ्य विमर्शका मोदन्ते ॥

अथ दक्षिणोदधेस्तीरे गोकर्णनिकेतमीश्वरमुपवीणयितुमन्त-रिक्षेण गच्छतो नारदस्य वीणालंकरणस्रक् अपार्थिवकुसुमैर्ग्र-थिता वायुना हृता अम्बरतलाद्भूमौ पतन्ती यदृच्छयोपवनेषु चरन्त्यो राजदम्पत्योरिन्दुमत्या वक्षोजोपरि क्षणमात्रं स्थितासीत्। तां चावलोक्यानुक्षणमेव विह्वला नरेन्द्रनन्दिनी विगलितप्राणा हृतचन्द्रा तमसा कौमुदीव सद्य एव निमिमील ॥

अत्राजप्रलापावसरे कविः करुणरसस्याधिदेवतेवाभाति। अ-सावस्मिन्प्रकरणे आयुषः कल्लोललोलताम्, व्यसनोपनिपातानां-मतर्कितोपनिपातिताम्, विधेरेकान्तनिष्ठुरताम्, प्राणिनः कर्म-फलभोगिताम्, महाकुलप्रसूतानां विद्यासंस्कारवतामपि विषयो-पभोगेषु तरलताम्, पार्थिवसुखस्य परिणामविरसताम्, तथा भवितव्यतां च तस्य तस्य वस्तुनः सकरुणं वर्णयन्द्रावयति मानसम्। न केवलमार्तरवेण वेजितास्तदानीन्तनाः कमलाक-राल्या विहगाः समदुःखाः, परमिदानीन्तना अपि वयं कवेः स्वभावोक्तिवैचित्र्येण समधिकदुःखा दूयामहे ॥

इह केचन श्लोकाः कुमारवने उर्वशीविरहेणोन्मादावस्था-मनुभवन्तं पुरूरवसम्, गुरुवधबद्धवैरया कपालकुण्डलया पुन-रप्यपहृतां मालतीमनुशोचन्तं माधवं च स्मारयन्ति ॥

अजस्येन्दुमतीमरणं प्रति प्रथमं संशयः, अनन्तरं पुनर्जीव-नप्रत्याशा, ततश्च निराशस्यापि दैवात्कदाचित्प्रत्युज्जीवनाशंसा, अन्ते च मृतेति निश्चयः, अनुक्षणमुन्मादालापाश्च क्रमेण मधुर-मुपपादिता रमयन्ति चेतांसि रसिकानाम् ॥

ततः कृच्छ्रात्प्रतिबोधितः, आप्तजनैरनुमरणान्निवर्तितः, पौ-रवधूमुखाश्रुभिरनुशोचितः, तरलहृदयमेनमात्मना द्रष्टुमनिच्छ-तेव सवनदीक्षाव्याजेनानागच्छता वसिष्ठेन शिष्यमुखादिन्दुमत्या जन्मान्तरीयशापादिकं देहिनां स्वकर्मगतिवश्यतां च प्रतिबोधितो-ऽप्यस्वस्थः, सूनोर्बालत्वात्कथं कथंचित्कतिचन समाः प्राणान्धा रयन्, प्रियायाः सादृश्यप्रतिकृतिदर्शनैः स्वप्नसाक्षात्कारैश्चात्मानं विनोदयन्, भिषजामसाध्येन रोगेणोपसृष्टतनुः, वर्महरं कुमारं प्रजारक्षणविधौ नियुज्य, जह्नुकन्यासरय्वोः पुण्ये व्यतिकरे देह-त्यागादमरलोकमासाद्य पूर्वाकाराधिकतररुचा कान्तया संगतो नन्दनाभ्यन्तरेषु सुखमरमत रघुसूनुरिति मन्दाक्रान्तया ललित-ललितं समकोचयत् हृद्यतममिमं सर्गम् ॥

**अथ नवमे**—श्रीरामभद्रावतारमुत्तरत्र वर्णयिष्यन् तद्गुरोर्द-

शरथस्य कथां संक्षेपतो द्रुतविलम्बितैर्यमकैः कथयितुमुपक्रमते। अस्मिन्सर्गे क्रमेण दशरथस्य कौमारयौवनवार्धकेषु भिन्नभिन्नां मनोवृत्तिं सम्यगुपपादयति। तथा हि—प्रथममस्य दशदिगन्तजितं पितामहं रघुं सर्वात्मनानुकर्तुमिच्छतो व्यसनेष्वनासक्तिः, वाचश्च प्रभवत्यपि वासवे अकार्पण्यं परिहासकथास्वपि अवैतथ्यं च, दिग्जयः, अध्वरदीक्षारतिश्च निरूप्यते। अनन्तरं चायमजस्य तनूजः पितरमनुसृत्य उद्भिद्यमाननवपल्लवरागावर्जितलोकलोचनेषु षट्पदकोकिलकूजितश्रवणोन्मुखयुवजनेषु नवनवोन्मिषदशोककुसुमसंदर्शनाविर्भूतप्रणयोत्कलिकातरङ्गेषु मलयमारुतोत्कम्पिततिलककुरवकवकुलकिंशुकसहकाराभ्यस्यमानाभिनयकलाद्वयेषु मधुगन्धसनाथया किसलयाधरसंगतया कुसुमसंभृतया स्मितरुचेव विलासिन्या नवमल्लिकया परिरभ्यमाणतरुषु परिणामरमणीयेषु मधुमासदिवसेषु विलासिनीविभ्रमावर्जितस्वान्तो मदनवशीकृतमात्मानं नावागच्छत्। ततश्च मृगयामपि सेवितुकामो मृगवनोपगमवेषभृत्, वनमालाग्रथितमौलिः, तरुपलाशसवर्णतनुच्छदः, तुरगवल्गनचञ्चलकुण्डलः, तनुलताविनिवेशितविग्रहाभिर्भ्रमरसंक्रमितेक्षणवृत्तिभिर्वनदेवताभिः सादरमभिनन्द्यमानागमनो गहनान्यरण्यानि जगाहे॥

अस्मिन्प्रकरणे कविर्वसन्तस्य चित्ताकर्षकमसदृशं रामणीय-

कं मृगयायाश्च गुणाननुवर्ण्य, महर्षयोऽप्यवशा भविष्यन्तीति व्यञ्जयन्, सर्गादौ सप्तमश्लोकोक्तार्थस्य विरोधं परिहरन्काव्यार्थं वर्णयति । दशरथो मृगययात्मानं विनोदयन्नप्यन्तरान्तरा प्रेयस्या देहं व्यवधाय रक्ष्यमाणं हरिणं प्रति दयार्द्रहृदयः, हरिणाङ्गनानां संत्रासचटुलैर्नेत्रैः प्रियानयनविभ्रमचेष्टितान्यनुसारितः, तुरगसमीपमागतस्यापि मयूरस्य रुचिरकलापैः प्रेयसीनां विगलितबन्धं केशपाशं भावयन्मुहुर्मुहुर्लक्ष्यं शिथिलयन्नुन्मना बभूवेतीदं कवेस्तन्मयत्वमाविष्करोति । अत्र यथैवानुबद्धसेवया मृगयानुक्षणं नरपतेश्चतुरेव कामिनी रागमवर्धयत्, तथैवास्य महाकवेः सूक्तिरपि पुनः पुनः सेवितानुचिन्तिता च विस्मृतान्यकरणीयममन्दमानन्दमनुभावयति ॥

एवं वसन्तोदयवासरेषु व्यसनेष्वत्यासक्त्या रजोनिमीलितो दशकण्ठारिगुरुः कदाचित्तमसा प्राप्य दूरस्थ एव कुम्भपूरणभवं निनदं द्विरदबृंहितमिति निश्चित्य शब्दपातिनमिषु विसृज्याज्ञानान्मुनिकुमारकं कंचिज्जघान । अनुक्षणमेव जातानुशयो जात्यन्धाभ्यां तदेकपुत्राभ्यां दम्पतिभ्यां 'दिष्टान्तमाप्स्यति भवानपि पुत्रशोकादन्त्ये वयसि' इति शप्तः, 'शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।' इत्यात्मानमाश्वासयन्नप्यन्तःशल्यः पुरीं विवेशेति वर्णयन्, शा-

पस्यानुग्रहरूपत्वमन्त:शल्यत्वमप्यतिरमणीयेनोपमानद्वयेन वि-
शदीकुर्वन्सर्गमिमं च वसन्ततिलकेन समकोचयत् ॥

**अथ दशमे—** महाकाव्यस्यास्य मध्यरत्नायमाने निखिल-वेदान्तसारप्रतिपादनपरेऽस्मिन्सर्गे पूर्वसूरिभिर्वाग्विषयीकृतं रघुवंशप्रदीपस्य श्रीरामभद्रस्यावतारं वर्णयति। अत्र महाकविर्वेदान्तिनां परां काष्ठामधिरूढो निखिलभुवनसर्गस्थेमभङ्गादिलीलम्, अखिलस्थावरजङ्गमशरीरमपि स्वयमविक्रियम्, निखिलहेयप्रत्यनीकसमस्तकल्याणगुणाकरम्, अवाप्तसमस्तकामम्, श्रुतिभिरपि स्वरूपतो गुणैश्चापरिच्छेद्यम्, कर्मवशं गतानां जीवानामतिकृपणां दशामनुशोच्य तानात्मज्ञानाधिगमोपायानुष्ठाने प्रवर्तयन्तम्, आगमैर्भिन्नभिन्नं पन्थानमनुधावद्भिरपि फलाभिसंधिरहितेन तत्समर्पितकर्मणा तन्निवेशितेन मनसा विशुद्धेन प्राप्यम्, श्रवणमननिदिध्यासनाद्यभ्यासनिगृहीतेनान्तःकरणेन योगिभिर्दहराकाशे साक्षात्क्रियमाणम्, ज्योतिर्मयं परात्परं पुराणमजरं पुरुषं सभक्त्युन्मेषं गम्भीरया वाक्सरण्या प्रसादयति; निखिलागमार्थानुरोधेन भूतार्थव्याहृतिरेवेयम्, न कविसमयसाधारणी स्तुतिरिति कण्ठतोऽनुशास्ति चेत्यहो! महाकवेरात्मज्ञता ॥

'प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।' इत्यत्र नवी-

नैर्गोलतत्त्वविद्भिः समग्रतया गोलाकारेण विशदीक्रियमाणानां महीमहार्णवभूधरादीनां कथमपरिच्छेद्यत्वमिति शङ्कानिवृत्तये, अत्रादिशब्देन न केवलं महार्णवभूधराः, परं कृष्णनिशानिशीथेषु निर्मलाम्बरतले परिदृश्यमानानि पुण्यकर्मभिरनन्तरजन्मस्वधिगम्यमानानि प्रत्येकं मह्यादितमोग्रहैः परिवृतानि इतोऽपि विपुलतराणि सूर्यमण्डलानीति गोलविद्भिरनुमीयमानानि सर्वशक्तिमतः परमात्मनोऽचिन्त्यमहिमद्योतकस्फुटाक्षरत्वेन तर्क्यमाणान्यसंख्येयानि तारकाण्यप्यनुसंधेयानि ॥

ततश्चरुसंज्ञितं वैष्णवं तेजो दधानास्तिस्रोऽप्यग्रमहिष्यः प्रजाभूत्यै अन्तर्गतफलारम्भाः सस्यानां सम्पद इव रेजुरित्यादिरमणीयैरुपमानैः प्रक्रम्याप्राकृतस्य गर्भस्योपचयं चतुर्णां कुमाराणामवतारमन्यादृशगुणादिकं चातिगभीरं वर्णयन्, कौशिकप्रार्थनाश्रवणमलिनितमुखस्य दशरथस्य भाविनीमवस्थां सूचयन्मालिन्या सर्गं समकोचयत् । अत्र ग्रहानुकूल्यं लग्नप्राशस्त्यं चावर्णयता कविना रघोरुदये परं 'ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैः' इति केनाशयेन तदेतद्वर्णितमिति विमर्शनीयं सुधीभिः ॥

**अथैकादशे**—कविः क्रतुविघातशान्तये कौशिकमनुगच्छतो रामलक्ष्मणयोर्लोकोत्तराणि विचेष्टितानि रथोद्धताच्छन्दोभिर्व-

र्णयन्, अन्तरान्तरार्थान्तरन्यासैरनुरूपैरुपमानैश्च बहूपदिशति लोकस्य। आदावेव सर्गस्य कथाम् 'तेजसां हि न वयः समीक्ष्यते' इति संक्षेपेण प्रतिजानीते। प्रथममेव स्त्रीवधवर्णनस्याश्लीलतामाकलयन्निव कविः श्लक्ष्णेन पदविन्यासेन बीभत्समपि शृङ्गारसहकृतमुद्गिरति। परमिह शब्दविन्यासव्यसनिनामभिरुचिं दर्शयन् पथश्च्युतमात्मानं नावबुध्यत इव। ततश्च वामनाश्रमपदमुपेयुषो राघवस्य पूर्वजन्मचरितान्यस्मरतोऽपि पर्युत्सुकत्वमुपवर्णयन्, जननान्तरसंस्काराणां भावस्थिरत्वमवबोधयति सम्यक्। अथ कृतवैवाहिकमङ्गलानां चतुर्णामपि भ्रातॄणां प्रतिनिवर्तनावसरे अनिमित्तानि वर्णयन्, रजस्वलाशब्दप्रयोगे पुनरपि पूर्ववत्स्खलितं मनो नियन्तुं न शक्नोतीव ॥

ब्राह्मक्षात्रयोर्लक्ष्मणी वपुषि संगमय्य विकटरोषभीषणं परिक्रामन्तं भार्गवं प्रथममापाततो निर्वर्ण्य ससोमेन घर्मदीधितिनोपमित्य, अनुक्षणमेवानौचित्यमाकलयन्निव सद्विजिह्वेन चन्दनद्रुमेणोपमिमीते इत्यहो! महाकवेः कापि संकल्पधोरणी ॥

रामजामदग्न्यौ पर्वदिवसावसाने वर्धमानपरिहीणतेजोभ्यां शशिदिवाकराभ्यामुपमिन्वन् तयो प्रकृतिभेदं सम्यगवगमयन्, अनन्तरश्लोके भार्गवविजयिनं रामं स्कन्देनोपमिमानः पुरावृत्तं किंचिद्विस्मृतवानिव महाकविः ॥

ततश्चाभोगलोलुपस्य भार्गवस्य स्वर्गपद्धतिं खिलीकृतवन्तं विजयिनं रामचन्द्रं परिरभ्य नितरां परितुष्टो दशरथः, मैथिलीदर्शनीनां पौराङ्गनानां लोचनैः कुवलयितगवाक्षामयोध्यामविशदिति सर्गमवसाययामास ॥

**अथ द्वादशे**—श्रीरामायणकाण्डपञ्चकोक्तकथामपि एकस्मिन्सर्गे आनुष्टुभैश्छन्दोभिर्वर्णयितुं प्रवृत्तस्य महाकवेराशयः कीदृश इति पर्यालोचनायाम्, महाकविरयम् 'अविघ्नमस्तु ते । देवकार्यमुपपादयिष्यतः' इति एकादशस्यावसान एव भार्गवमुखेन—देवकार्यनिर्वहणरूपा वाल्मीकिना काण्डपञ्चकप्रतिपादिता कथा ह्युत्तरस्मिन्सर्गे वर्णयिष्यते—इति निपुणं सूचयित्वा द्वादशेऽस्मिन् राघवस्य साकेतनिर्गमादारभ्य रावणवधान्तमपदानमुक्त्वा '**आपृच्छ्य राघवमनुष्ठितदेवकार्यम्**' इति सर्गमवसाययन्स्वाशयं सम्यगाविष्करोतीतीदमवधेयं प्रथमतः । अथ किमर्थं काण्डपञ्चककथां देवकार्यनिर्वहणत्वेन निर्दिश्य एकस्मिन्नेव सर्गे आनुष्टुभैश्छन्दोभिर्वर्णयतीति विचारणीयम् । इह हि पूर्वं नन्दिनीपयःपानादुत्पन्नस्य पितृनियोगात्प्रथमे वयस्येवाध्वरहयरक्षणे नियुक्तस्य देवधेनुप्रसादादतीन्द्रियेष्वपि भावेषूपपन्नदर्शनस्य जैत्रयात्रां कृत्वा विश्वजितमाहृतवतः स्वच्छन्दमरणस्य रघोः, देवचरुपानसंजातस्य कौमार एव तातनिदेशा-

त्क्रतुपालनकर्मनियुक्तस्य महर्षिप्रसादादधिगतदिव्यास्त्रस्य देव-कार्यनिर्वहणं कृत्वाश्वमेधेन यक्ष्यमाणस्य कालाधिदेवताप्रार्थनया सर्वलोकप्रतिष्ठां स्वतनुं प्रवेक्ष्यतः श्रीरामभद्रस्य च सर्वात्मना-साम्यमाकलयन्महाकविः, पूर्वं रघोर्वृत्तान्तोपपादनावसरे चतुर्थ-सर्गोक्तकथायाः समानां रामचन्द्रस्य दिग्विजयस्थानीयां राव-णवधान्तां जैत्रयात्रां द्वितीयाष्टकस्य चतुर्थे द्वादशे सर्गे आनु-ष्टुभैरेव छन्दोभिरुद्गृणातीति मन्यामहे। किं च, 'दिनान्ते निहि-तं तेजः सवित्रेव हुताशनः' 'आसीदासन्ननिर्वाणः प्रदीपार्चि-रिवोषसि' इत्येतयोरेकविषयकत्वमपि निर्दिष्टमाशयमुपबृंहयति। सर्गद्वयस्याप्यनेकधा सादृश्यमनुवाचनेनैवावगम्येत सहृदयैर्विम-र्शकैः। सर्गं चेमं कविर्विमानप्रस्थानानुरूपेण छन्दसावसाययति॥

**अथ त्रयोदशे**— कविरम्बरतले विमानारूढेन रामभद्रेण सार्धमात्मनो मनोऽपि संचारयन्, तत्रस्थ एव भुवं पश्यन्, तस्या रामणीयकं लङ्काद्वीपादारभ्यायोध्यावधि सरसं वर्णयन्, पूर्वस्मिन्सर्गे वक्तव्यानप्यनुक्तान्विषयानधिकृत्य गभीरमुत्प्रेक्षते। इह रामभद्रो न साधारणो नरः, परमादिपूरुषो नारायण एवे-त्यन्तरान्तरा स्मरन्महाकविरादावेव क्षीरोदधिसंभवया श्रिया सह विहगमारुह्य विहायसि चरन्तं हरिमनुध्यायन्निव दृश्यते[1]॥

---

1. अथात्मनः शब्दगुणं गुणज्ञः पदं **विमानेन** विगाहमानः।
**रत्नाकरं** वीक्ष्य मिथः स **जायां** रामाभिधानो **हरि**रित्युवाच॥'

ततो द्यावापृथिव्यौ युगपदेवाक्ष्णोर्विषयीकुर्वन्निव, सेतुना सीमन्तितं फेनिलमम्बुराशिं छायापथभ्राजमानेन चारुतारेणाकाशेनोपमयन् '[1]आवेशात्कवनोद्भवाद्दृगमला विज्ञानरूपा कवेर्यात्यायाति नभोऽवनेश्च नभसो भूमिं भ्रमन्ती सुखात्' इत्याङ्गलमहाकविसूक्तिमनुस्मारयति । मत्सेतुनेति वदता रामभद्रेणानुक्षणमेवाहंकारं परिहर्तुकामेनेव 'गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं संक्रमिते तुरङ्गे । तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥' इत्यात्मनः पूर्वपुरुषाणां सगरतनयानां माहात्म्यमपदानं च यत्साधूपन्यस्तम्; तदिदं— पूर्वपुरुषैर्यत्साधितं तस्य शततमीं कलामपि मदीयमिदं सेतुबन्धनं न स्पृशति, अथवा अकिंचित्करमपीदं कर्म तेषां वंशोद्भवत्वेन मया कर्तुं पारितं नान्यथा—इति द्योतयतीति सहृदया मोदन्ते ॥

अथ प्रसङ्गात्सागरस्य महिमानं दशभिः श्लोकैरुद्गृणाति । प्रथमं वृष्टेः स्वरूपं याथातथ्येन वर्णयन् 'अपां च ज्योतिषां

---

अस्मिन्पद्ये उक्तरीत्या कवेरनुध्यानं ध्वन्यत इति व्यङ्ग्यमर्मवेदिभिः स्वसंवेद्यमेवेति विस्तरतो न व्याख्यायते ॥

1. The poet's eye in a fine Frenzy rolling,
Doth glance from heaven to earth, from earth to heaven

*Shakespeare's Midsummer Night's Dream. Act V. Scene I.*

च मिश्रीभावकर्मणो वर्षकर्म जायते' इति यास्कनिरुक्तं स्मारयन्, न केवलमत्र परं दशमे सर्गेऽपि 'सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः' इति, पुनश्च मेघे 'धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः' इति च निरूपयन्, मेघस्य सचेतनत्वं पौराणिकैरुद्घुष्यमाणं सर्वथोपेक्षणीयमिति बोधयति ॥

सागरस्य परार्थैकफलत्वम्, तेजसामुत्पादकत्वम्, अपरिच्छेद्यं वैपुल्यं च मधुरमुपन्यस्य, सिन्धूनामुदधिसंगमसंनिवेशादिकं स्वभावोक्तिसरण्या आद्यं रसमाश्रित्योत्प्रेक्षते । अयं कविः, रघोः कीर्तिः, आदिपूरुषस्य गुणाः, सागरस्य वैपुल्यं च इयत्तयावधारयितुमशक्यानीति ब्रवीत्येतत् भूतार्थव्याहृतिरेव; न पण्डितहृदयावर्जकातिशयोक्तिरिति विदांकुर्वन्तु विमर्शकाः ॥

महोदधौ यदृच्छया विद्रुमदर्शनेनैव प्रियाधरं स्मारितः, 'तवाधरस्पर्धिषु' इति प्रथमं प्रस्तुत्य, ततः 'पयांसि पातुम्' इति वर्णनावसर एव संजातामधरामृतास्वादतृष्णामनन्तरश्लोक एव वर्णयितुमवकाशमलभमानः, असहमानश्च विलम्बं सद्य एव समुद्रवर्णनं परिसमाप्य, तमालतालीवनराजिनीलामम्बुधेर्वेलामुत्प्रेक्ष्य, वेलानिलसंभावनाव्याजेन 'मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम्' इति निपुणमुपक्रमत इत्यनुमोदन्ते कविहृदयविदः ॥

सागरस्य वेलामतीत्य गच्छतो विमानात्पश्चाच्चक्षुर्विवर्तनसमये 'एषा विदूरीभवतः समुद्रात्सकानना निष्पततीव भूमिः' इत्युत्प्रेक्षमाणः कविः सर्वात्मनात्मनस्तन्मयत्वमवबोधयति। ततश्च विमानस्य गमनं स्वभावोक्तिसरण्या निर्दिश्य, शैत्यसौरभ्यवतो मलयानिलस्य सुखस्पर्शमनुभवन्, आकाशवायुम् 'असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः' इति व्यङ्ग्यसरण्या विटत्वेन प्रथमं भावयन्, अनुपदमेवानौचित्यमाकलयन्निव 'आचामति स्वेदलवान्मुखे ते' इति जानकीवदनात्स्वेदलवापनयनं केसरिकलत्राभिलाषिणोऽनिलस्यान्तःशुद्धिकरं प्रायश्चित्तमिति रामभद्रमुखेन साधु वर्णयतीति साकूतमभिनन्दन्ति रसिका ॥

विटसार्वभौमस्यानिलस्य स्पर्शं भर्त्रा वर्ण्यमानमसहमानया क्रुद्धयेव जानक्या स्वेदापनोदनायेवोद्धाटिताद्विमानवातायनात्स्पृष्टस्य घनस्य 'आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते' इति निर्देशेन, पूर्वं दशकन्धरेण नीतया सीतया यस्मादम्बरतलोद्देशाद्विसृष्टमाभरणं सुग्रीवेण लब्धं तत्रैव ऋष्यमूकपरिसरारण्यानामुपरि अद्य स्थितं विमानमिति सूचयतीत्यहो! महाकवेः कापि व्यङ्ग्यधोरणी ॥

अत्र मल्लिनाथः 'उद्भिन्नविद्युद्वलयो घनस्ते द्वितीयं वलय-

मर्पयतीव । चण्डीत्यनेन कोपनशीलत्वाद्भीतः क्षिप्रं तवामुञ्चति मेघ इति व्यज्यते' इति व्याकुर्वन्, सीतया एकमेव वलय धृतम्, विद्युद्वलयं च सीताकरार्पणोचितपरिमाणवत्, श्रीरामस्य महापराधिष्वपि दयां संवर्धयन्ती जानकी स्वतः कोपनशीलेत्या-द्याशयमाविष्करोति ॥

एवं रामभद्रस्य छन्दानुरोधेन तत्रैव स्थिताद्विमानादितस्ततो दृष्ट्वा अपोढविघ्नतया सुखमारब्धनवोटजानां जनस्थाननिकटव-र्तिनां महर्षीणां सुखासिकामवगत्य नितरां हृष्टेन, प्रसङ्गादनु-भूतपूर्वं सीताविरहजमात्मनो दुःखमनुस्मारितेन, जनस्थानत्या-गादारभ्य ऋश्यमूकपरिसरारण्याधिगमपर्यन्तं भूतपूर्वं वृत्त जानक्यै कथयता रघुनाथेन, दशभिः श्लोकैर्निपुणमुपन्यस्तो विप्रलम्भशृङ्गारः करुणमुद्गिरति ॥

इह महाकविः प्रथममुत्तरतो विप्रकृष्टान् जनस्थानपरिसर-वासिनश्चीरभृतः 'अमी' इति निर्दिश्य, तदनु तपोविघ्नकारिणां खरदूषणादीनां निवासेन दूषितं जनस्थान प्रदर्श्य, ततश्च रक्षसा नीतां जानकीं विचिन्वता रामभद्रेण साक्षात्कृतेन नूपुरे-णालंकृतं भुवो भागमभिवर्ण्य, पञ्चवटीमारभ्य दक्षिणामाशामुत्प्रे-क्ष्योत्प्रेक्ष्य माल्यवन्तं निकषा रामभद्रस्यागमनं निरूप्य, वर्षा-गमे मैथिलीविरहवेदनास्तमितधृते राघवस्य क्रमेणातिभूमिं गता-

मुन्मादावस्थां सरसं वर्णयन्, आदिकाव्यप्रतिपादितां विमानस्य माल्यवतः परिसर एवावस्थितिं व्यङ्ग्यसरण्या दर्शयन्, ततस्तस्य गमनं काञ्चनकिङ्किणीनां स्वनेन सूचयन्, पुनरपि पञ्चवटी-जनस्थानादिकं क्रमेणावतारयति ॥

अथ राघवो गोदावरीपरिसरारण्यभूधरानुपेत्य पञ्चवटीमुद्वीक्ष्य स्मर्यमाणमधुरान्सह सीतया नीतान्वासराननुस्मरन्, किंचिदिव रजोगुणेनाक्रान्तः, अनुक्षणमेवागस्त्याश्रमाद्विमानमार्गमावृत्य प्र-सरता हविर्धूमेन * रजोविमुक्तान्तरात्मा पावनानाश्रमानवलोक-यन्, सत्त्वोद्रेकेण तत्तन्महर्षीणां माहात्म्यमनुवर्णयन्, शृङ्गाग्रल-ग्नाम्बुदवप्रपङ्केषु जनकतनयास्नानपुण्योदकेषु चित्रकूटोपान्तेषु दृष्टिमाबध्नन्, पतिव्रताललामभूतयानसूयया पवित्रितमत्रेः प्रशा-न्तपावनमाश्रमं स्तुवन्, परिचितपूर्वं वनस्पतिमेकं जानक्यै नि-र्दिशन्, गङ्गायमुनाव्यतिकररामणीयकं स्वभावोक्तिमाश्रित्य बहुधोत्प्रेक्षते । अत्र कविः, समुद्रपत्न्योर्गङ्गायमुनयोः संनिपाते प्रथममभिषेकादात्मानं पवित्रीकृत्य, पश्चादभ्युक्षणादिना पवि-

---

* 1. अत्रानुगोद मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तः ॥
2. घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ।

अत्र कविः प्रथमपद्येन श्रीरामस्य रजोगुणाक्रमणं व्यञ्जयन्, द्वितीयेन रजसोऽपसारं हविर्धूमेन निष्पाद्यमानं कण्ठतो ब्रवीति ॥

त्रीकृतां तनुमग्नावाहुतिमिव तत्रैव बुद्धिपूर्वकं त्यजतां तत्त्वज्ञानं विनैव भूयः शरीरबन्धो नास्तीति कथयति । इह मल्लिनाथः 'अन्यत्र ज्ञानादेव मुक्तिः, अत्र तु स्नानादेव' इति ब्रवीति । परमसौ पूर्वं 'तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोर्देहत्यागादमरगणनालेख्यमासाद्य सद्यः' इत्यस्य व्याख्यानावसरे "यथाकथंचित्तीर्थेऽस्मिन्देहत्यागं करोति यः । तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि ॥" इति स्कान्दपुराणवचनमुद्धृत्य प्रदर्श्य किंनिमित्तमत्र निरुपपत्तिक 'स्नानादेव मुक्तिः' इत्यभिप्रैतीति न ज्ञायते । यदि अत्रापि देहत्यागान्मुक्तिः, तर्हि तदेव वचनमिहापि प्रमाणीभवितुमर्हति । 'तनुत्यजाम्' इति पदस्य वैयर्थ्यमपि नापतति । मोक्षप्राप्तौ स्नानादप्याचरणे दुर्घटः शरीरत्यागरूपोपायः, तत्त्वावबोधेन यथाकथंचित्समतुलामधिरोढुमर्हति । स्नानेनैव मुक्तिलाभकथनं तु केवलमर्थवाद एव पर्यवस्येदित्यलमतिक्षोदेन ॥

ततश्च रामभद्रो निषादाधिपतेः पुरं निर्वर्ण्य, अत्रैव मया प्रथमं जटाबन्धः कृतः । तदसहमानेन सुमन्त्रेण 'कैकेयि कामाः फलितास्तव' इत्यतिकरुणं रुदितमिति जानकीं स्मारयन्, अन्यापदेशरीत्या—तदानीं कैकेय्याः कामा न फलिताः, परं त्वद्यैव चतुर्दश संवत्सरान्मुनिवृत्तिमाश्रित्याटव्यां नीत्वा पा-

लितसंगरे प्रतिनिवृत्ते मयि---इति सूचयन् , अनन्तरमेव कुल-राजधानीपरिघायमाणां सरयूमुद्वीक्षमाणः, साकेतगमनं प्रति आत्मनो योग्यताद्यैव संपन्नेति व्यञ्जयति ॥

ततः सरय्वाः स्वतःपवित्रतामनुरूपेणोपमानेन विशद-यन् , आत्मनः पूर्वपुरुषैर्यज्वभिः सैव पुण्यतरीकृतेति वर्ण-यन् , प्रथमं शैशवे तस्याः सैकतोत्सङ्गेषु प्रवृत्तामात्मनो बाल-क्रीडामनुस्मरन् , तां सामान्यधात्रीत्वेन भावयन् , अनुक्षणमेव सरयूप्रान्तोपवनेषु विहरणे नितरामभिलाषिणः पितुर्दशरथस्य वृत्तमनुध्यायन् सगौरवं तां नदीमात्मनो जननीत्वेन आकल-यन् , सरयूनिर्झरशीकराणां वोढारमनिलं जननीहस्तोपगूहनमि-वानुभवन् , ससैन्यं प्रत्युद्गच्छन्तमर्घ्यपाणिं भरतमवलोक्य राज्यश्रियं न्यासमिव प्रत्यर्पयिष्यतस्तस्य भोगेष्वनास्थां साधुतां च प्रशंसन्, ऊर्मिलां त्यक्त्वा चतुर्दश संवत्सरान् समदुःखसु-खीभूय स्वसुखनिरपेक्षमनितरसाधारणीं परिचर्यां कृतवतो लक्ष्म-णस्याग्रतो भरतप्रशंसा कदाचित्सौमित्रेर्वैमनस्यमुत्पादयेदिति मनसि कृत्य, अतिरमणीयेनोपमानेन प्रथमं लक्ष्मणस्य सौमनस्य-मपि संपादयन् , तयोरुभयोरप्यात्मनः कृतज्ञतां सरसं प्रदर्श्य, करुणरसवर्षिणा ' पित्रा विसृष्टां मदपेक्षया यः श्रियं युवाप्यङ्क-गतामभोक्ता । इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमा-

सिधारम् ॥' इति पद्येन, धर्म्येण मार्गेणोपलब्धामङ्कशायिनी-मसामान्यां रमणीमणिमिव स्थितां राज्यश्रियं स्वयं यूनोऽपि रामापेक्षया अनुपभुञ्जानस्य इयन्ति वर्षाणि स्थिरया धिया आत्मसुखपराङ्मुखस्य भरतस्य उग्रासिधाराव्रतम्, जायां नगरे विसृज्य ज्यायांसमनुगतवतो लक्ष्मणस्य भक्तिव्रतादप्युग्रतर-मिति मनसि कृत्वा लक्ष्मणापेक्षया भरतस्य सर्वात्मना प्राशस्त्यं वर्णयन्, ज्योतिष्पथादवतीर्णाद्विमानादवातरत्। ततश्च कुल-गुरुं प्रणम्य, भरतं पर्यश्रुः परिष्वज्य, मन्त्रिवृद्धान्संमान्य, सुग्रीवे विभीषणे चात्मनः कृतज्ञतां गौरवं च प्रकृतिसंनिधावा-दरेण प्रदर्श्य, भूयश्च तमेव विमानवरमारुह्य ससैन्यः कुलरा-जधानीं समया प्रमदोपवनमध्युवासेति समकोचयद्रमणीयमिमं च सर्गम् ॥

**अथ चतुर्दशे**— पूर्वसर्गावसान एव 'रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्,' 'लङ्केश्वरप्रणतिभङ्गदृढव्रतं तद्वन्द्यं' इति सूचितभाविजनापवादमूलां मैथिलीराघवयोरापतन्तीं शोच-नीयां दशामादावेव महाकविरयमन्यापदेशरीत्यावगमयति ।*

सीतायाः श्वश्र्वोश्च व्यतिकरे कविः, वधूजनस्य विनीतिं श्व-

* **भर्तुः प्रणाशादथ शोचनीयं दशान्तरं** तत्र समं प्रपन्ने अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥

श्रूजनस्य नैष्ठुर्यं सोत्प्रासालापांश्च व्यङ्ग्यमर्यादया वर्णयतीव ।*
अत्रेदं रहस्यम्—— भो अविमृश्यकारिणि (वत्से), कनकमृगा-
भिलाषिण्याः लक्ष्मणमपि निष्ठुरमभिहितवत्याः (तवैव) अग्नि-
कल्पेन (शुचिना) वृत्तेन सुचिरमायासितौ कुमारौ दैवान्महत्कृ-
च्छ्रं तीर्णौ । किमाक्रन्दनेन? उत्तिष्ठ, इत्येवं सोल्लुण्ठभाषण-
मपि पश्चादस्मात्प्रत्येतव्यमिति खलु महाकवेराशयः—— इति ॥

मल्लिनाथस्तु —— सीतायाः पातिव्रत्यमहिम्नैव रामभद्रस्य रक्षोविजयशक्तिः संजातेतीदं जानक्याः प्रियं भूत्वा तत्त्वकथनं च भवति—— इत्यभिप्रैति । तथा सति अयमर्थः 'रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय । अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥' इत्युत्तरत्र रामभद्रमुखतो वर्ण्यमानेन कवेराशयेन विसंवदति । तत्त्वतो निरूप्यमाणे च सीतायाः पातिव्रत्यमूलकमेव रामभद्रस्य शौर्यमिति कथनं मैथिल्याः पातिव्रत्यमहिमप्रशंसायामेव पर्यवस्येत् ॥

सर्गेऽस्मिन्कविः सीताविवासनं वर्णयन्करुणरसस्योच्छ्रायमापन्नः स्वयं रोदिति, अस्मानपि क्रन्दयति ॥

---

* उत्तिष्ठ वत्से ननु सानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव ।
कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते **प्रियमप्यमिथ्या** ॥
अस्य श्लोकस्यार्थद्वयमवधारणीयम् ।

प्रथमं मूर्धाभिषिक्तस्य श्रीरघुनाथस्य धर्मार्थकामेषु समां वृत्तिं पौरकार्याविरोधेनेन्द्रियार्थानुसेवनं च क्रमेणोपपादयति । ततश्च सीताया दौहृदलक्षणानि दृष्ट्वा हर्षस्य परां कोटिमापन्नो राघवः, तदानीमेवाशनिपातसंनिभमात्माश्रयं कौलीनमुपश्रुत्य 'अयोघनेनाभितप्तमय इव' नितरां विदीर्णहृदयः, क्षणमितिकर्तव्यतामूढः, 'किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत सत्यजामि' इति दोलाचलचित्तवृत्तिः, 'दारत्यागी भवाम्याहो! परस्त्रीस्पर्शपांसुलः' इति संशयदोलामधिरूढं दुष्यन्तं स्मारयति ॥

वृजिनादृतेऽपि निराकरिष्णोः सावरजस्य भर्तुः सर्वथा मङ्गलमाशंसमाना आत्मनो भागधेयमेव पुनः पुनर्निन्दन्ती परिणतगर्भा व्यसनातिभाराद्विग्ना कुररीव मुक्तकण्ठ भूयो भूयः क्रन्दन्ती तपस्विनी जानकी, सर्वेणापि प्रकारेण, दुष्यन्तेन परित्यक्तां 'सा निन्दन्ती स्वानि भाग्यानि बाला बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता' इति निर्दिश्यमानां शकुन्तलामनुकरोति ॥

अत्र कविः— पतिव्रताललामभूतां जानकीमात्मनः समक्षमेव वह्नौ विशुद्धां निर्दोषेति जानन्नपि राघवः य कश्चित्प्राकृत इव, अनधिगतधर्मसूक्ष्म इव, अविद्वानिव, अकुलीन इव, असमर्थ इव, अनात्मज्ञ इव केवलं लोकवादश्रवणान्निष्करुणमत्याक्षीत्— इत्यभिप्रैति ; उपालभते च रामभद्रम् 'वाच्य-

स्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् । मा लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥' इति । अस्मिन्प्रकरणे 'न चावदद्भर्तुरवर्णमार्या' इति प्रथममुक्त्वा पश्चात् *'वाच्यस्त्वया मद्वचनात्स राजा' इति वदन् कविः, स्वाशयमेव सीतामुखत आविष्करोति व्यङ्ग्यसरण्या इति मोदन्ते काव्यज्ञाः ॥

एवं निर्वासितापि 'तपस्विसामान्यमवेक्षणीया' इति सगद्गदं भाषमाणामनाथां जानकीं परित्यज्य गच्छन्तं लक्ष्मणम् 'रामानुज' इति निर्दिशन् कविः, तस्य क्रौर्यमन्यादृशमित्यवबोधयति । तदानीं तिर्यञ्चोऽपि समदुःखाश्चुक्रुशुः । हरिण्यः क्षुधं शमयितुमुपात्तानपि दर्भान्विजहुः ; वृक्षाश्च कुसुमानि । एवं सति, किं कार्यं रामानुजस्यायोध्यायामिति च निपुणं सूचयति । वनेऽपीत्यनेन रामगृहेऽपीति व्याकरोति ऋजुको मल्लिनाथः ॥

निर्दोषायाः प्रेयस्या येन केनापि कारणेन परित्यागो नितरां लाघवं जनयति पुरुषस्य ; विशेषतो महाकुलप्रसूतस्य विवेकिन इत्याशयेनैवायं कविः, शाकुन्तले इतिहासोक्तकथामपि

* वाच्य – निन्द्यः, विज्ञापनीयः, इति अर्थद्वयमिहावधेयम् ।

किंचिद्विपरिवर्त्य अभिज्ञानवृत्तान्तं प्रस्तुतवानिति विदांकुर्वन्तु विमर्शकाः ॥

इमं च स्वाशयं प्रथमं सीतामुखतो निर्दिशन्, अनौचित्यमाकलयन्निव अनुपदमेव---इदं सर्वमपि ममैव जन्मान्तरपातकानां विपाकेन, उत राज्यलक्ष्मीचेष्टितेन, आहोस्विद्भवितव्यतया वा संवृत्तम्, कल्याणबुद्धेस्तव कामचारो नास्ति—इति तन्मुखेनैव वर्णयन्, 'नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत्, येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः' इतिवादिनीं शकुन्तलां स्मारयति ॥

पुनरप्यनुचितकारिणं रामं प्रति पटुप्रसरं मन्युं निरोद्धुमशक्तः कविः, वाल्मीकिमुखेन 'त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्**भरताग्रज** मे' इति रामभद्रमुपालभते। इह, पितुर्निदेशमविगणय्य, मातुराज्ञामवधीर्य, आत्मनः क्लेशमपि तृणाय मत्वा, पुरान्निर्वासितायाप्यग्रजाय राज्यश्रियं न्यासमिव प्रत्यर्पितवत उचितज्ञस्य भरतस्य वृथाज्येष्ठोऽयं जानन्नेवानुचितकारीति मनसि कृत्वा रामभद्रं भरताग्रजत्वेन निर्दिशतीति मोदन्ते काव्यरसज्ञाः ॥

ततश्चाश्वासिता मैथिली, वाल्मीकेराश्रममुपेत्य तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया चरन्ती, अनुदिवस

मुनिसंनिवेशैरशून्यतीरां तमसां वगाहमाना, तत्सैकतोत्सङ्गबलि-क्रियाभिः मनःप्रसादमापादयन्ती, पुष्पफलादिकमाहरन्तीभि-रुदारवाग्भिर्मुनिकन्यकाभिर्विनोद्यमाना, सुतनिर्विशेषं पयोघटैरा-श्रमबालवृक्षान्संवर्धयन्ती, अभिषेकप्रयता वल्कलिनी प्रजासततये शरीरं धारयन्ती, दुष्यन्तेन निष्ठुरं परित्यक्तां मेनकया मरीचि-महर्षेराश्रमं प्रापितां तापसीं वृत्तिमाश्रित्यात्मानं वर्तयन्तीं सानु-मतीमुखेन भर्तुः प्रणयमुपश्रुत्य कथंचिदाश्वस्तां शकुन्तलामनु-कुर्वती, कृच्छ्रेण दुर्वारं भर्तृपरित्यागदुःखं विषेहे इति वर्णयन् तत्कथादत्तवैराग्य इव सर्गमपि समकोचयन्मन्दाक्रान्तया वृत्त-सरण्या कविः ॥

अथ पञ्चदशे— कविः वीररसप्रधानमुपरितनमुदन्त-जातमनुरूपैरानुष्टुभैश्छन्दोभिर्वर्णयन्, [1]आद्ये श्लोके, वाङ्मनः-कर्मभिः पवित्रामसामान्यां सतीमणिं समदुःखसुखां प्रणयिनीं मिथ्यावादक्षुभितेन चेतसा निष्ठुरं परित्यज्य बहिरेव सर्वाकार-रमणीयां निःसारां कांचिदनुरक्तः अन्तस्तोषं न लेभे रामभद्र इति कथयन्, सीतापरित्यागापेक्षया पृथिवीत्यागोऽपि वरीया-निति निपुणं सूचयति । पूर्वसर्गस्यान्तिमे पद्ये अन्यां नोपयेमे

1 कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥

इति कविना कण्ठत उद्घुष्टमर्थं जानन्नपि किमर्थं पुनरपि रामस्य स्त्र्यन्तरपरिग्रहो नास्तीति अस्य श्लोकस्याभिप्रायमाविष्करोति मल्लिनाथ इति न ज्ञायते । 'छिद्रेष्वनर्था बहुलीभवन्ति' इति न्यायानुसारेण दयितां जानकीं कान्तारे परित्यज्य नितरामस्वस्थस्य शून्यहृदयस्य रामभद्रस्य पृथिवीपालनं न सर्वथा सुखासिकामजनयदित्याशयेन, अनुपदमेव लावणासुरस्य विजृम्भितम्, यमुनातीरभाजां महर्षीणामाक्रन्दनम्, दिङ्मूढस्य रघुपतेस्तैरेव वधोपायकथनम्, अस्य रक्षसो वधानन्तरमेव कस्यचिच्छिशोरकालमरणम्, तत्पितुराक्रोशः, शूद्रस्य तपश्चरणम्, शम्बूकस्य तस्य हननमित्यादि वर्ण्यते । न केवलं रामभद्रः, परमसौ कविरप्यस्मिन्सर्गे प्रायेण शून्यहृदय इव दृश्यते । अन्यथा 'अपवाद इवोत्सर्गम्' 'पश्चादध्ययनार्थस्य धातोरधिरिवाभवत्' इत्यादीनि शाब्दिकैकहृद्यानि उपमानानि न प्रयुञ्जीत ॥

अथ कदाचित् कुशलवमुखेन गीयमानामात्मनः कथामुपश्रुत्य नितरां तुष्टो रामभद्रः, भगवन्तं वाल्मीकिमभ्येत्य प्रीतिदायत्वेन समग्रं राष्ट्रं तस्मै न्यवेदयत् । परमसौ कारुणिको महर्षिः, राज्यमनङ्गीकृत्य तत्स्थाने जानक्याः पुनरपि राघवेण परिग्रहं वव्रे, इत्येवं वर्णयतीत्यहो! बहुमानोऽस्मिन्महाकवेः ।

अत्रेदमवधेयम्— अल्पमूल्यमिदं राज्यं मया प्रत्यर्प्यमाणस्य अदुष्टस्य अन्यादृशस्य सीतारत्नस्य शततमीं कलामपि न स्पृशतीति रामभद्रं प्रतिबोधयतीव महामुनिः—इति । ततश्च भर्तुराज्ञया जनसमक्षमात्मनः शुद्धिं प्रत्याय्य रामस्य महतीमुत्कण्ठां जनयित्वा वसुंधरायामन्तरधाज्जानकी । इह महाकविः, अवलोकनेनैव त्रिलोकीमपि पवित्रयन्त्या मैथिल्याः पुनरपि जनसमक्षमात्मनः शुद्धिं प्रति प्रत्ययोत्पादनं सर्वथा न साम्प्रतमिति ध्वनयन्निव पृथिव्यां सद्य एव तस्या अन्तर्धानं वर्णयति ॥

अथ भृशमुत्कण्ठितः संरब्धोऽपि रामभद्रो मुनिवेषेण कालेन प्रतिबोधितः पुत्रेषु राष्ट्रधुरं निवेश्य चतुर्भिरप्यंशैः सर्वलोकप्रतिष्ठां स्वतनुमाविशदिति सर्गमुपसंहरन् कविः, अन्यापदेशरीत्या आत्मनोऽपि स्वास्थ्यमवबोधयतीत्यहो ! तन्मयत्वं महाकवेः ॥

**अथ षोडशे**— कविः, अष्टधा प्रसरति चतुर्भुजांशप्रभवे महीयसि वंशे ज्येष्ठस्य कुशस्य वृत्तं रसभावनिरन्तरां वृत्तिमाश्रित्य उद्गृणाति । तत्रादौ कुशावत्यां प्रतिष्ठितं कुशमुपेत्य, आत्मनः कृपणां दशामुपपादयन्त्याः साकेताधिदेवतायाः स्थितिं सरसां स्वभावोक्तिमालम्ब्य सकरुणं वर्णयति । तथा हि— स्तिमितप्रदीपे अर्धरात्रे वनितावेषमास्थाय कुशस्य शय्यागृहं

प्रविष्टा 'का त्वं शुभे कस्य परिग्रहो वा' इति पृष्टा च तेन सेयमयोध्याधिदेवता आत्मनो दशां व्याचष्टे—वीतनाथाया मम दशा कीदृशीति वक्तुमपि न शक्यते, किं पुनर्द्रष्टुम्। मणिमयपर्यङ्कादिभिः पूर्वमलंकृतं सौधादिकं संप्रति विशीर्णं दृश्यते। भास्वत्कलनूपुराभिर्मरालगतिभिर्महिलाभिरलंकृतो राजपथः सांप्रतं नदन्मुखोल्काविचितामिषाभिः शिवाभिर्वाह्यते। प्रमदाकराग्रैरास्फालितं वापीसलिलमद्य वन्यमहिषाणां शृङ्गैराहतं क्रोशति। युवमनोरथलक्ष्यभूताभिः कामिनीभिः सालक्तकचरणविन्यासैर्भूषितः सोपानमार्गः, अद्य हतन्यङ्कुभिरस्रदिग्धपदैर्व्याघ्रैराक्रम्यते। यासां शाखाभ्यः कुसुमानि विलासिनीभिः करपल्लवैः सदयमुपात्तानि, ता एवोद्यानलताः, हन्त! वन्यैर्वानरैर्निर्दयं क्लिश्यन्ते इत्येवं सकरुणं रुदती, कुलराजधानीपरिघायमाणायाः शून्योपान्तवानीरगृहायाः सरय्वा दशामुपपाद्य कुशस्य साकेतपरिग्रहे बुद्धिमुत्पादयन्ती, अभिव्यक्तमुखप्रसादा अयोध्याधिदेवता तिरोबभूवेति वर्णयन् कविरन्यादृश स्वभावोक्तिरसं पाययते॥

अनन्तरमेव जङ्गमराजधानीत्वेनोत्प्रेक्षितां महतीं सेनामादाय, पौरवर्गैः समं कुशावत्याः प्रस्थाय, नर्मदां तीर्त्वा, विन्ध्याद्रिमतिक्रम्य, गजसेतुभिर्गङ्गां विलङ्घ्य, सरयूशी-

करानाहरतानिलेन प्रत्युद्गतः, कंचित्कालमुपशल्य एव कृत-सेनानिवेशः, शिल्पिसंघैर्नवीकृतामयोध्यां प्रविशन्कुशः, दक्षिणस्या दिशः प्रस्थाय क्रमेणोत्तरतो यात्रां कृत्वा सरयूनिर्झरशीकरिणा वातेनालिङ्गितस्य उपशल्य एव कंचित्कालं स्थित्वा पुनरपि प्रस्थायायोध्यां प्रविष्टवतो रामभद्रस्यानुकरोतीति निपुणं सूचयति ॥

अयोध्यायाः स्वयंवृतपतिर्मैथिलेयो रघोस्तनूज इव पित्रपेक्षया सर्वात्मना गुणैर्न्यून इति प्रदर्शयन्निव इक्ष्वाकुभिस्तुरङ्गमेधावभृतावतीर्णैः पुण्यतरीकृतायाः तीरनिखातासंख्येययूपायाः सरय्वा निर्मलाम्भसि तस्य जलक्रीडाभिरतिं वर्णयिष्यन् कविर्ग्रीष्मागमं सरसमुपपादयति । अत्र कविः, किमर्थं घर्म आजगामेति प्रथमं प्रस्तुत्य अनुपदमेव रवेरुत्तरदिगाश्रयणं ततस्तस्या हिमस्रुतिं च वर्णयित्वा क्रमेण निदाघमवतारयतीति समालोचनीयं सुधीभिः ॥

अथ जलक्रीडां स्वभावोक्तिमाश्रित्य वर्णयन् अन्तरान्तरा उत्प्रेक्षादिषु आशयाविष्करणे च कविसमयनिबद्ध इव दृश्यते ॥

अथाज्ञातपातं सलिले निमग्नस्य दिव्यवलयस्य गतिमनवगत्य दुर्मनायमानः कुशः, अन्तर्ह्रदवासिना कुमुदेन लौल्यादपहृतं तदिति निश्चित्य सौपर्णमस्त्रं प्रयुयुजे । तदसहमानेन

कुमुदेन कन्यामुपायनीकृत्य प्रसादितः कुशः कुमुद्वती परिणिनायेति वर्णयन्, अजस्येव कुशस्यापि पार्थिवसुखलोलुपतां सम्यगुपपाद्य सर्गमवसाययति ॥

**अथ सप्तदशे**—धर्म्येण मार्गेण प्रजापालनचतुरस्य कस्यचित्साधारणस्य नृपस्य रीतिमवगमयन्, कौमुद्वतेयस्यातिथेश्चरितमेकेन सर्गेण वर्णयन्, एवं खलु वर्तितव्यं भूतिकामेन क्षितीशेन इति बहूपदिशति लोकस्य। यथैव रामभद्रापेक्षया कुशः सर्वात्मना न्यूनः, तथैव तस्मादप्यतिथिरधरः शास्त्रसंस्कारेण दण्डनीतिनिपुणानां मन्त्रिवृद्धानां साहाय्येन च साधारणेषु नृपतिषु श्लाघ्यो भूत्वा राज्यं शशास ॥

'पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना' इतीदम् 'लोकेन चैतन्यमिवोष्णरश्मेः' इत्यनेन समानविषयकं सत् कवेरस्मिन्नुपमाने निरतिशयं मनःप्रसादं द्योतयति ॥

'अपुनात्सवितेवोभौ मार्गावुत्तरदक्षिणौ' इत्यत्र यद्यप्युपमा, अतिथिना पितृमातृकुलयोः पवित्रीकरणं विशदयितुं प्रयुक्ता; तथाप्यत्रोपमायाः सर्वांशस्वारस्यं न प्रतीमो वयम् ॥

'ववृधे वैद्युतस्याग्नेर्वृष्टिसेकादिव द्युतिः' इयं चोपमा मन्त्रपूताभिरद्भिः स्नानं प्रतीच्छतोऽतिथेः प्रदीप्तां द्युतिं विशदयन्त्यपि, अन्येषां मन्त्रजलस्नानेन द्युतिः क्षीयते, अस्य तु नितरामभिवर्धते

इति ध्वनयन्ती नातीव हृदयंगमा । एवमग्रेऽप्ययं सर्गः, अर्थतः शब्दतः सारतश्च पूर्वसर्गापेक्षयातीव न्यूनः साधारणकविनिबद्ध इवातिथिं सर्वात्मनानुकरोति । राजनीतिप्रतिपादनक्रमश्च कामन्दक्यादिनीतिग्रन्थसरणिमनुसरतीत्यहो! मानुषतासुलभो लघिमा महाकविमेनमपि क्वचित्क्वचिच्छब्दाडम्बरसरणौ पातयतीति महदिदं विषादस्थानम् ॥

अतिथिश्च यायजूको भूत्वा श्रद्धापूताभिराहुतिभिर्लोकपालान्प्रीणयन्, मन्त्रवश्यैः प्रतिप्रियाकरणप्रत्यवायशङ्किभिरिव तैः प्रहिताभिर्वृष्ट्यादिभी राष्ट्रस्य सौभाग्यमाहरन्, सुचिरं महीं शशासेति मन्दाक्रान्तया समकोचयदिमं सर्गम् ॥

**अथाष्टादशे**—अतिथेरनन्तरजातानामेकविंशतेश्चक्रवर्तिनामुदयास्तमयौ संक्षेपतो वर्णयन्, भौतिकसुखस्यानित्यतां प्रदर्शयन्, तत्तत्सार्वभौमानां नामाक्षराण्याश्रित्य शाब्दिकानामभिरुचिमालम्ब्य पदावलिभिर्नितरामाकृष्टः साधारणकविरिव नानार्थपदघटितैर्यमकैः श्लेषैश्चात्मानं विनोदयन्, तैरेव शब्दजालैः कबलितः, 'मृगायताक्षो मृगयाविहारी सिंहादवापद्विपदं नृसिंहः' इति वर्ण्यमान सिंहेन हतं ध्रुवसन्धिमनुकरोति । तथा हि— 'नैषधस्य सुतायामुत्पादितो निषधो निषधान्नगेन्द्रादनूनसारोऽभवत् ।' 'तस्यानलौजा नलाभिधानः पुत्रो

जज्ञे' 'ततश्च नभोनामको नभश्चरैर्गीतयशा नभस्तलश्यामतनुर्नभोमास इव प्रजानां कान्तोऽजनि।' 'तस्यात्मजः पुण्डरीको द्विपानां पुण्डरीक इव राज्ञामजय्यः पुण्डरीकाक्ष इवाहृतपुण्डरीकया श्रिया वव्रे" इत्यादिकमत्र निदर्शनम् ॥

[1]एवं पथश्च्युतमात्मानं नृसिंहप्रसादादिवावगत्य, शब्दवागुराबन्धं छित्त्वा, पुनर्जात इव स्वास्थ्यमुपलभ्य, सहजं गाम्भीर्यमालम्ब्य, ध्रुवसन्धेरकालमरणानन्तरं राज्येऽभिषिक्तं सुदर्शनाह्वयं शिशुमवलम्ब्य स्थितं रघोः कुलम्, नवेन्दुना नभसा शाबैकसिंहेन काननेन कुड्मलपुष्करेण तोयेन चोपमयन्, नैकरसान्पाययति रसिकानित्यहो! विलसितमन्यादृशं महाकवेः॥

ततश्च सुदर्शनस्य शैशवादारभ्य यौवनप्रादुर्भावावधि भिन्नभिन्नां दशां रमणीयैरनुरूपैश्च उपमानैस्तत्र तत्र विशदयन्, कुमारस्य कथां राजकन्यापरिणयानुरूपस्याष्टादशवयसः प्रादुर्भावावधि अष्टादशैः श्लोकैरुपपादयन्, अष्टादशमिमं सर्गं भाविनोऽग्निवर्णस्य मलिनां दशां ध्वनयन्निव मालिनीभ्यामवासाययदितीदं विमर्शकानां निरतिशयमाह्लादं जनयति ॥

---

1. अत्रेदमवधेयम्— अस्मिन्सर्गे पञ्चत्रिंशात्पद्यादनन्तरेषु श्लोकेषु यमकानां श्लेषाणां चादर्शनात्, तस्मिंश्च पञ्चत्रिंशेऽन्तिमपादस्यावसाने 'नृसिंह.' इति पदस्य प्रयोगाच्च नृसिंहप्रसादस्तर्क्यते विमर्शकैः- इति

अस्य सर्गस्यावसान एव कविः उत्तरसर्गे वक्ष्यमाणां स्त्रीविधेयनवयौवनस्य इन्द्रियार्थपरिशून्यमेकमपि क्षणान्तरं सोढुमक्षमस्य अग्निवर्णस्य विषयसुखलोलुपतां सङ्कल्पस्य विषयीकुर्वन्, केवलां मानसीं वृत्तिमाश्रित्य सर्वात्मना तन्मयतामापन्नः, आशैशवात्सम्यग्विनीतस्य गुणैरहीनस्य प्रजायै गृहमेधिनः पार्थिवसुखानि तृणाय मत्वा पश्चिमे वयसि नैमिषं गत्वा पुण्यतीर्थैरात्मानं पवित्रीकृत्य फलाभिसंधिरहितेन विशुद्धेन चेतसा निस्तुलं तपश्चरितवतो वशिनामुत्तमस्य श्रीमतः सुदर्शनस्य नवं यौवनं वनितानेत्रनिर्वेशनीयं मध्विति रागबन्धप्रवालं मनसिजतरुपुष्पमिति सर्वाङ्गीणमकृत्रिममाकल्पजातमिति आद्यं विलसितपदमिति च वर्णयन्, औचित्यमपि विसस्मारेतीदं कवेरस्य धिषणां संकल्पमयीमवगमयति । बोधयति च—अन्ये कवयः शाब्दिकैकहृद्यानि शास्त्रीयाणि वा केवलं श्रवणसुखदानि मञ्जुलानि वा कतिचन पदानि मुहुर्मुहुः प्रयोक्तुमभिलाषेणाकुलीक्रियमाणहृदयास्तदनुरोधेन यं कंचिदनुगतमर्थं परिकल्प्य, यथाकथंचित् छन्दोबद्धानि पद्यानि रचयित्वा शब्दजालैरात्मानं विनोदयन्ति, अयं तु न तथा—इति ॥

एवं त्रयःपञ्चाशत्संख्याकैः पद्यैरेकविंशतेश्चक्रवर्तिनां चरितानि संक्षेपतो वर्णयन्, परस्परं गुणतो भिन्नैरपि प्रजारक्षण-

विषये बद्धश्रद्धै राष्ट्रकार्याविरोधेन इन्द्रियार्थमनुसेवमानैः स्वर्गगामिभिः सार्वभौमैः सह गणयितुमनर्हस्य भोगलोलुपस्याग्निवर्णस्य कथाया अस्मिन्नेव सर्गे वर्णनमनुचितमित्याकलयन्निव कविः, सद्य एव सर्गमेनं परिसमाप्य एकोनविंशं सर्गमारभते॥

**अथैकोनविंशे**— कविरग्निवर्णकथोपपादनव्याजेन लब्धपालनविधौ खेदमनङ्गीकृतवतः, कुलोचितमधिकारं सचिवेषु निवेशितवतः, मेदिनी आत्मनो भोगायैव कल्पितेति मत्वा विषयोपभोगेषु निमग्नस्य, दिवानिशमन्तःपुर एव कालं यापितवतः, कामिनीसहचरस्य, स्वसमकालिकस्य कस्यचिद्राज्ञोऽतिजुगुप्साकरं विलसितं वर्णयन्, पार्थिवसुखस्य परिणामविरसतां दुःखभूयस्त्वं च सम्यगुपदिशति ॥

अत्र कविः अग्निवर्णस्य विहारप्रकारं विस्तरेणोपपादयन्, कामसूत्रकारैरेकीभूय सुदूरं मूढमात्मानं नाध्यगच्छदिति किंचिदिव दुर्मनायन्ते नवीनाः काव्यविदः । प्राचीनास्तु जलक्रीडासंभोगशृङ्गारादिकं विस्तरतो वर्ण्यमानं सत् काव्यस्यास्य महत्त्वं सम्पादयतीत्यभिनन्दन्ति ॥

अथ वैद्ययत्नपरिभाविना राजयक्ष्मणा कबलितावयवं राजानमुपवन एवाग्निसात्कृतवद्भिरयशःप्रमार्जनपरैर्मन्त्रिवृद्धैः राज्येऽभिषिक्ता दृष्टशुभगर्भलक्षणा पतिव्रता महिषी क्रमेणोपचीय-

मानगर्भभरालसा मन्दमन्दमितस्ततः क्रामन्ती हेमसिंहासनस्था भर्तुरव्याहताज्ञा राज्यं विधिवदशिषदिति मन्दाक्रान्तया सर्गमवसाययन्, काव्यार्थमुपसंजहार ॥

एवमसौ महाकविरेकोनविंशत्या सर्गैरेकोनत्रिंशतश्चक्रवर्तिनामपदानं सरसमभिवर्ण्य, एकवंशोत्पन्नानामपि गुणैर्हीनानामैहिकेऽप्यामुष्मिके च फले तारतम्यं प्रदर्श्य, भिन्नभिन्नाभिरुचिमतामप्येकं हृदयावर्जकमुत्तममिदं महाकाव्यं रचयित्वा, श्लाघितो बुधैः, मानितो राजभिः, पूजितः कविवृन्दैः, अभिनन्दितो रसिकैः, सामोदमीक्षितः कृतज्ञया देव्या भारत्या, भारतवर्षमिदमात्मनालंचकार ॥

अथेदानीम् 'उपमा कालिदासस्य' इत्यभियुक्तोक्तेरौचित्यम्, तत्र तत्रानुरूपपदप्रयोगचातुरी च महाकवेरिदं काव्यमधिकृत्य दिङ्मात्रेणोदाह्रियते । तथा हि—

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ स. १. श्लो. ११.

अत्र त्रयीमयाज्ज्योतिषः समुत्पन्नो मनुः, छन्दसामोंकार इव सारभूतः प्रथममाविर्बभूवेति वर्णयन्कविः, तदन्ववायसंभूतानां स्वतः शुद्धिमत्त्वमवगमयन्ननन्तरमेव 'तदन्वये शुद्धि-

मति' इति प्रक्रमते । काव्यारम्भे ह्यात्मनः प्रणवानुसंधानमपि ध्वनयति ॥

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ स. १. श्लो १३.

इह मुक्ताधिगमाय वारिधेर्निकटं गच्छतां नक्रमकरादिभ्यो भीतिः, रत्नप्राप्तावुत्कटेच्छा च दुर्वारा इति सर्वविदितं लोकानुभवं प्रदर्श्य, तद्वदेव राजसेवाया अपि दुर्घटत्वमुपदिश्य, निर्दोषाणामपि राज्ञां संनिधावात्मनस्तादृशमनुभवं व्यङ्ग्यसरण्या निर्दिश्य, नृपगुणानां भीमकान्तत्वमेव शोभावहमित्यवबोधयति। अयं च श्लोकः '[1]न च न परिचितो न चाप्यरम्यश्चकितमुपैमि तथापि पार्श्वमस्य । सलिलनिधिरिव प्रतिक्षणं मे भवति स एव नवो नवोऽयमक्ष्णोः' इति मालविकाग्निमित्रनाटकोक्तं स्मारयति ॥

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ स. १. श्लो. १८.

विश्वंभराया रसो भानुना गभस्तिभिर्बाष्परूपेण परिणमितः स्वीकृतश्च यथा मेदिन्या एव निरतिशयाभिवृद्धये विनियुज्यते, तथैव पृथिवीपालनजागरूकैर्वसुधाधिपैः प्रजाभ्यो गृहीतः षष्ठो

1. अङ्क. १. श्लो. ११

भागः समग्रतया सहान्यत्रोपार्जितैर्द्रविणैस्तासामुपभोगायैव विनियोज्यः,' नात्मन एव सुखासिकायै इति सम्यक् शिक्षयन्, "[1]सौराज्यरम्यानपरो विदर्भान्' '[2]सौराज्यबद्धोत्सवया विभूत्या' इत्यन्यत्र वक्ष्यमाणमाशयमनुसृत्य धार्मिकाणां राज्ञामभावे राष्ट्रस्य सौभाग्यं नियतमेव हीयेतेति सूचयति कविः। इदं च पद्यम्, "नवमासधृतं गर्भं भास्करस्य गभस्तिभिः। पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्[3]' इति वाल्मीकिसुभाषितेन समतुलामधिरोढुमिच्छतीव ॥

तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ स. १. श्लो ७०.

ब्रह्मर्षिणा स्वयं सेकेन संवर्धितेनाप्यफलेनाश्रमवृक्षकेणात्मानमुपमयन् दिलीपः, स्वस्य वसिष्ठायत्तजीवितत्वम्, सर्वेष्वपि कर्मसु अस्वातन्त्र्यम्, महर्षेर्निरवधिकप्रेमास्पदत्वं च द्योतयन्, [4]तदाश्रमवर्तिनीभिर्मुनिकन्यकाभिर्जलसेकसंवर्धितेष्वाश्रमवृक्षकेष्वपि न कश्चिदफलः, परं जातकर्मादिनिखिलसंस्कारेषु वसिष्ठमन्त्रोक्षणजप्रभावादेवाभ्युदयमापन्नस्यात्मनो वन्ध्यत्वं नितरामभाग्यपरिणाम इति ध्वनयन्, विनीतेः परां कोटिमापन्नो महर्षे-

1. सर्ग ५. श्लोक ६०, 2. सर्ग १६. श्लोक १०. 3. किष्किन्धाकाण्ड . सर्ग २८. श्लोक ३. 4. सर्ग १. श्लोक ५१.

मेनस्यनुशयमुत्पाद्य, करुणां संवर्ध्य, निरतिशयं प्रसादं जनयतीत्यहो! रामणीयकमुपमानस्य ॥

अत्र 'विधातः' इत्येकं पदमवलम्ब्य 'शक्तोऽप्युपेक्षसे' इति भावं वर्णयन्मल्लिनाथसूरिर्दिलीपस्य किंचिदिव स्वातन्त्र्यं महर्षिं प्रत्युपालम्भं चावगमयति ॥

अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ।
ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम् ॥ स. १. श्लो. ८३.

इह सायंतने काले वनान्तरादुपावृत्तां पल्लवस्निग्धपाटलां श्वेतरोमाङ्कालंकृतललाटां नन्दिनी बालशशिगर्भितया संध्ययोपमयन्कविः, '[1]विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम्' इति पूर्वमेव प्रस्तुते महर्षिसंदर्शनसमये उक्तरीत्यैव संध्यारुणेऽम्बरतले बालशशी समदृश्यत इति द्योतयन्, संध्याया इव नन्दिन्या उपास्यत्वं पवित्रतां च विशदयन्, '[2]अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' इति वक्ष्यमाणाशयानुरोधेन बालशशिन इव निष्कलङ्कस्य गुणैरहीनस्य रघुचन्द्रस्योदयमपि व्यञ्जयति । देवधेन्वाः सन्ध्यासादृश्यमन्यत्रापि '[3]तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या' इति वर्णयति ॥

1. सर्ग १. श्लोक ५६. 2. सर्ग ३. श्लो ७५. 3. सर्ग २ श्लोक २०.

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन ताम् ।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ स. १. श्लो. ८८.

यथैव ब्रह्मचर्यमनुतिष्ठता वटुना निरन्तराभ्यासेनावधानेन च विद्या साध्यते, तथैव नियमपरेण त्वया एकाग्रया भक्त्या उपास्यमाना नन्दिनी नियतमेव प्रसन्ना भविष्यतीति वसिष्ठमुखेन दिलीपं बोधयन्कवि, धेन्वाः सर्वकामफलप्रदत्वमप्याविष्करोति ॥

निवर्त्य राजा दयितां दयालु-
स्तां सौरभेयी सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां
जुगोप गोरूपधरामिवोर्वीम् ॥ सर्ग २. श्लो. ३.

अत्र सौरभेयी गन्धवत्या गोरूपधरया धरित्र्या उपमयन्कविः, चतुःसमुद्रसारभूतानि रत्नानि दोग्धुमलमियमपीति व्यञ्जयन्, धेन्वाः परिचरणं पृथिवीपालनवद्दुष्करमेवेति ज्ञापयन्, उर्वीरक्षणमप्युग्रं व्रतान्तरमित्युपदिशति । '[1]औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः' इत्युपर्यपि सुरभेर्वसुंधरासादृश्यं वर्णयति ॥

---

1. सर्ग २. श्लोक ६६.

पपौ वसिष्ठेन कृताभ्यनुज्ञः
शुभ्रं यशो मूर्तमिवातितृष्णः ॥ सर्ग २. श्लो ६९.

अत्रोदेष्यमाणस्य रघुचन्द्रस्य कारणद्रव्यतया वर्ण्यमानं पयः यशसो मूर्तित्वेन भावयन्कविः '[1]हंसश्रेणीषु तारासु' '[2]इक्षुच्छायनिषादिन्यः,' '[3]आरूढमद्रीनुदधीन्वतीर्णम्' इत्यादिपद्येषु निर्दिश्यमानमर्थं पूर्वमेव संकल्पस्य विषयीकुर्वन्, यशोधिष्ठानदेवतैव पयोरूपेण परिणता रघ्वात्मनावतरिष्यतीति सूचयतीव ॥

अतिप्रबन्धप्रहितास्त्रवृष्टिभि-
स्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः
स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥ सर्ग ३. श्लो.५८.

इह कविः मेघवाहनमम्बुदेन कुमारं च रघुं वैद्युतेनाग्निना तुलयन्, शक्रप्रहितास्त्रधाराभी रघोर्दीप्तिर्न क्षीणा परं ववृधे इति बोधयन्, 'स्वतश्च्युतम्' इत्यनेन '[4]गुरुभिरभिनिविष्टं लोकपालानुभावैः' इति प्रस्तुतमाशयं स्मृतिपथमारोपयन्, '[5]ववृधे वैद्युतस्याग्नेर्वृष्टिसेकादिव द्युतिः' इत्यन्यत्रापीमामुपमामनुसंदधाति ॥

---

1 सर्ग ४ श्लोक १९ 2. सर्ग ४. श्लोक २०. 3. सर्ग ६. श्लोक ७७ 4. सर्ग २ श्लोक ७५ 5 सर्ग १७.. श्लोक १६.

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः॥ सर्ग ४. श्लो ९.

दिलीपस्यानुभावमश्लथयन् तदात्मजन्मनो रघोर्गुणाधिक्यं सुप्रसिद्धेनोपमानेनावगमयन्कविः, सहकारवत्सर्वोपयुक्ते वैवस्वतमनोर्वंशे तदा तदा निरतिशयरसवन्ति फलान्युत्पद्यन्ते इति बोधयन्, दिलीपः पुष्पभूतः, रघुः फलम्, अजो न द्वयम्, तथा दशरथः प्रसूनम्, राघवः फलम्, कुशो न द्वयमिति च द्योतयति॥

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम्॥ सर्ग ४. श्लो. २७.

अभ्युदयकाङ्क्षिणीभिः पौरवधूभिरवकीर्णैर्लाजैरभिषिक्तं रघुं मन्दरोद्धूतैः क्षीरोर्मिपृषतैरभिलिप्तेनाच्युतेनोपमयन् कविः, दिग्विजयार्थं प्रस्थितवतस्तस्य भाविनीं जयलक्ष्मीप्राप्तिं ध्वनयति। अच्युतशब्देन, प्राप्ता च लक्ष्मीर्न कदापि च्युता भविष्यतीति च व्यञ्जयति। राज्ञामभ्युदयार्थं पौरैरनुष्ठीयमानो लाजविसर्गाचारः '[1]अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः' इत्यत्र पूर्वमेवोपवर्णितः॥

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा॥ स. ४. श्लो. २८.

---

1. सर्ग २ श्लोक १०.

अत्र दिलीपसूनोरिन्द्रसाम्यं शंसता कविना प्राच्या दिशा वल्लभत्वेन वृतः अभिनन्द्यमानागमनो रघुरकुतोभयः सुधीरं जगामेति सूच्यते ॥

निद्रावशेन भवताप्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ स.५. श्लो.६७.

इह, कन्याललामभूतां नरेन्द्रनन्दिनीं कामयमानस्याजस्य भावावबोधकलुषा दयितेव निद्रा चिरेण नयनाभिमुखीबभूव इति [1]प्रथममुत्प्रेक्षमाणः कविः—निद्रावशं गतं दयितमवलोक्य कलुषितस्वान्ता लक्ष्मीः खण्डितेवाबला निशि तदाननशोभावहं चन्द्रमसमुत्कण्ठाविनोदनत्वेन सस्पृहमीक्षमाणा, क्रमेण पश्चिमदिगङ्गनाप्रणयिनं मलिनप्रभं तमवगत्य विषण्णा, अन्यत्र सादृश्यविनोदमलभमाना निद्रया मोक्ष्यमाणमजमेव प्रतीक्षते—इति वन्दिमुखेन वर्णयन्, कुमारस्य भोजकन्याप्राप्तावुत्कटेच्छया पूर्वरात्रे सुचिरं जागरणम्, प्रातश्चाप्रबोधनम्, उषःकालनिद्राया गर्हितत्वं चावगमयति ॥

1 सर्ग ५. श्लोक ६४.

अत्र कविरजप्रबोधनव्याजेन रमणीयोपमानगर्भितैरुदारैर्वचोभिरुषःकालं वर्णयति । तथा हि— अद्य प्रभातप्राया रजनी । निखिलजगन्नयनानन्दकरोऽयमोषधीनाथो वारुणीं परिगृह्य श्रिया परित्यक्तोऽस्तमेति । अरुणांशुभिन्नान्यन्तःप्रचलितभ्रमराणि सरसिजानि क्रमेणोन्मिषन्ति । वृन्ताच्छ्लथानि कुसुमान्याहरन्पद्मवनामोदमेदुरः प्राभातिको वायुः सुखपरिमलः परितो वाति । विद्रुमच्छविषु पल्लवोदरेषु पतितान्स्वच्छमुक्तामणिनिभान् हिमजलकणानावहन् द्रुमः सदशनार्चिर्लीलास्मितं तनोतीव । उदेष्यमाणस्य चण्डभानोः पुरःसरोऽरुणः, तमांसि दूरतो विद्राव्य मार्गशोधनं करोतीव । उभयपक्षविनीतनिद्राः स्तम्बेरमाः शय्यां जहतः शृङ्खलानि मुखरयन्ति । तेषां दन्तकोशाश्च तरुणारुणरागयोगाद्भिन्नाद्रिगैरिकतटा इव विभान्ति । आयतेषु पटमण्टपेषु नियमिता वाहाः, निद्रां विहाय वक्त्रोष्मणा सैन्धवमिश्रितानि लेह्यानि मलिनयन्ति । पुष्पोपहारा विरलरचनाः, प्रदीपाश्च निस्तेजस्काः संवृत्ताः । पञ्जरस्थः शुको वन्दिनां गिरं मञ्जुवागनुवदति—इति । अत्र '[1]उदारवाचः' इति प्रक्रम्य '[2]मञ्जुवागनुवदति' इत्येतदन्तायामजप्रबोधनाय प्रयुक्तायां वाचि, अन्यादृशं सौष्ठवमवबोधयति महाकविः ॥

---

1. सर्ग ५. श्लोक ६५. 2. सर्ग ५ श्लोक ७४.

परार्ध्यवर्णास्तरणोपपन्न-
मासेदिवान्रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्ति-
र्मयूरपृष्ठाश्रयिणा गुहेन ॥ स. ६. श्लो. ४.

अथ नैकविधरत्नप्रभावितानालंकृतमासनं मयूरपृष्ठेनोपमय-न्नजस्य गुहसादृश्यं भावयति कविः । [1]तत्र तत्र रघुवंशजाता-न्नृपतीन्स्कन्देनोपमिमानः पार्वतीनन्दने आत्मनो निरतिशयां भक्तिमभिव्यञ्जयति ॥

तां प्रत्यभिव्यक्तमनोरथानां
महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां
शृङ्गारचेष्टा विविधा बभूवुः ॥ स. ६. श्लो. १२.

इह स्वयंवरार्थमागतानां राजकुमाराणामिन्दुमतीं प्रति तत्त-न्मनोरथाभिव्यञ्जिकाश्चेष्टाः पादपानां प्रवालशोभात्वेन भावय-न्कविः, चेष्टाद्यभावे तेषामरासिक्यं प्रसज्येतेति सूचयतीव । अत्र मल्लिनाथसूरिः शृङ्गाराभासं पश्यति ॥

---

1.

| सर्ग | श्लोक | सर्ग | श्लोक | सर्ग | श्लोक |
|---|---|---|---|---|---|
| १ | ३७ | २ | २३ | ३ | ५५ |
| ५ | ३६ | ६ | ४ | ७ | १ |
| ९ | २ | ११ | ८३ | | |

मेरोरुपान्तेष्विव वर्तमान-
मन्योन्यसंसक्तमहस्त्रियामम् ॥ स. ७. श्लो. २४.॥

[1]पूर्वं नन्दिनीसपर्यावर्णनावसरे दिलीपं सुदक्षिणां च संध्यामुभयतः स्थिताभ्यां दिनक्षपाभ्यामुपमित्य, पुनरप्यत्र तामेवोपमां प्रकारान्तरेणोपक्षिपतीतीदं महाकवेरस्मिन्नुपमाने निरवधिकं मनःप्रसादमनुमापयति ॥

अङ्गारशेषस्य हुताशनस्य
पूर्वोत्थितो धूम इवावभासे ॥ स ७. श्लो ४३.

अनेन '[2]पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः' इति सदृशमुपमानं स्मार्यते ॥

सोऽस्त्रव्रजैश्छन्नरथः परेषां
ध्वजाग्रमात्रेण बभूव लक्ष्यः ।
नीहारमग्नो दिनपूर्वभागः
किंचित्प्रकाशेन विवस्वतेव ॥ स. ७. श्लो ६०.

इयं ह्युपमा अस्त्रव्रजैः पिहितस्यालक्ष्यरूपस्याजस्य दशां सम्यग्विशदयति । अत्र नीहारसाम्यादस्त्राणामकिञ्चित्करत्वमभिव्यज्यते । इदं च '[3]न खलु तावदशेषमपोहितुं रविरलं

1. सर्ग २ श्लोक २०. 2. सर्ग ४ श्लोक २. 3. सर्ग ९ श्लोक ३२.

विरलं कृतवान्हिमम्' इत्युपरि वक्ष्यमाणमाशयमनुस्मारयति ॥

गान्धर्वमस्त्रं कुसुमास्त्रकान्तः
प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ स ७. श्लो ६१.

रघोरात्मजं कवि. पूर्वमेव त्रिः[1] रतिकान्तेनोपमित्याद्य पुनरपि तेनैव तुलयन्राघवस्य सौन्दर्यमन्यादृशमित्यवगमयति । सुकुमारेणास्त्रप्रयोगेण सर्वेषामपि राज्ञां मोहमुत्पाद्य निद्रालोलतामापादयन्नजः सत्यमेव '[2]संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम्' इति कुमारसंभवे निर्दिश्यमानं कुसुमास्त्रमनुकरोतीव ॥

प्रशमास्थितपूर्वपार्थिवं
कुलमभ्युद्यतनूतनेश्वरम् ।
नभसा निभृतेन्दुना तुला-
मुदितार्केण समारुरोह तत् ॥ स. ८. श्लो १५.

इदं हि '[3]यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतोऽरुणपुरःसर एकतोऽर्कः' इति शाकुन्तलोक्तं व्याकरोतीव ॥

1. सर्ग ५ श्लोक६३ स ६ श्लो २. स ७ श्लो १५. 2. कुमारसभवः स ३ श्लोक ६६. 3 अङ्क ४ श्लोक २

अस्यामुपमायां न केवलं कवेः, पठितॄणामपि निरतिशय आमोद उपलभ्यते ॥

प्रतियोजयितव्यवल्लकी-
समवस्थामथ सत्त्वविप्लवात् ।
स निनाय नितान्तवत्सलः
परिगृह्योचितमङ्कमङ्गनाम् ॥ स. ८. श्लो. ४१.

निश्चेतनामिन्दुमतीं भग्नतन्त्रीकया मूकीभूतया वीणया तुलयन्महाकविः '[1]किमिदं किन्नरकण्ठि सुप्यते' इत्युपरि निर्दिष्टरीत्या तस्यास्तुलितविपञ्चीनादानुकारिणो गानस्याकाण्ड एवोच्छेदं विगतजीवितत्वेऽपि वपुषः सश्रीकतां स्वस्थीकरणोद्यममनुतिष्ठतो राघवस्याङ्के जायाशरीरारोपणौचित्यं च विशदयन्, मुनेः परिवादिनीतश्च्युताया दिव्यकुसुममालिकायाः पातेन छिन्नतन्त्री अपरेयं वल्लकीत्युत्प्रेक्षत इव ॥

पतिरङ्कनिषण्णया तया
करणापायविभिन्नवर्णया ।
समलक्ष्यत बिभ्रदाविलां
मृगलेखामुषसीव चन्द्रमाः ॥ स. ८. श्लो. ४२. ॥

वाग्विषयातीतमस्योपमानस्य रामणीयकं स्वसंवेद्यमेव रसिका-

1. सर्ग ८. श्लोक ६४.

नाम्। अत्र क्रमेण प्रेयस्याः वपुषि लक्ष्यमाणेन वैवर्ण्येन विगतजीवितत्वमाशङ्कमानो मलिनितवदनः कोसलाधिपः '[1]सुखमेतावदजस्य गण्यताम्' इति वक्ष्यमाणरीत्या अचिरादस्तमेष्यन्तं चन्द्रमसमनुकरोतीति निपुणमभिव्यञ्जयन्कविः, उत्तरत्र च पुनरप्यजम् '[2]क्षणदापायशशाङ्कदर्शनः' इत्यभिवर्ण्य तमेवाशयं द्रढयति ।

तदपोहितुमर्हसि प्रिये
प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तम-
स्तुहिनाद्रेरिव नक्तमोषधिः ॥ स. ८. श्लो. ५४.

रजनीषु प्रदीपवत्प्रज्वलन्त्यो लता गौरीगुरोः शैलस्य गुहासु बहुश उपलभ्यन्ते इति महाकविनानेन [3]पुनः पुनरनुवर्ण्यते । गतप्राणाया अपि दैवात्कदाचित्प्रत्युज्जीवनमाशंसमानोऽजः, तुहिनाद्रिगुहागतस्य गाढतमसा निमीलितप्रायचक्षुषो जनस्य दैवादन्तिके प्रज्वलन्ती लतेव प्रतिबोधमुपलभ्य दिङ्मूढं मामानन्दयेत्यङ्कगतामिन्दुमतीं प्रार्थयते इति कथयन्कविः, चैतन्यं ज्वलितेन तुलयन् '[4]लोकेन चैतन्यमिवोष्णरश्मेः' इति पूर्वोक्तं स्मारयति ॥

1. सर्ग ८ श्लोक ६९. 2. सर्ग ८. श्लोक ७४. 3. सर्ग ४. श्लोक ७५. सर्ग ९ श्लोक ७० सर्ग १०. श्लोक ६६. 4. सर्ग ५. श्लो ४.

स्मरतेव सशब्दनूपुरं
चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा
त्वमशोकेन सुगात्रि शोच्यसे ॥ स. ८. श्लो ६३.

उत्तमनायिकायाः 'पादाघातादशोकः' सद्यः कुसुमितो भवतीति कविभिरिदं विश्वस्यते । नास्माभिर्दृष्टचरमिदम् । अशोकद्रुमं चरणस्पर्शेनानुगृह्य पुष्पोद्गमात्पूर्वमेव लोकान्तरमगादिन्दुमतीति बोधयन्, पूर्वस्मिन्पद्ये कुसुमोद्गमो भावीति वर्णयित्वानुपदमेवानुभूयमानं पुष्पोद्गममश्रुवर्षत्वेनोत्प्रेक्षमाणः अशोकस्यापि शोकं भावयन्कविः, '[1]धिगिमां देहभृतामसारताम्' इत्युक्तरीत्या आयुषः कल्लोललोलतामुपदिशति ॥

समदुःखसुखः सखीजनः
प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते
व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ स. ८. श्लो. ६५

दर्शनीयं वर्धिष्णुं च राजबालं प्रतिपच्चन्द्रेण तुलयन् कविः "[2]पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः" इति पूर्वोक्तमुपमानं पुनरप्यनुसंदधातीव । 'अहमेकरसः' इत्ये-

1 सर्ग ८. श्लोक ५१. 2. सर्ग ३. श्लोक २२.

तावता अन्तस्तोषमलभमान इव तमेवाशयं '[1]अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः' इति सम्यग्विशदयतीव ॥

तदलं तदपायचिन्तया
विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया
वसुमत्या हि नृपाः कलत्रिणः ॥ स. ८. श्लो. ८३.

अत्र [2]ननु 'शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः' इति पूर्वमाविष्कृतमजस्याभिषङ्गजडत्वं जानन्नेव वसिष्ठः 'वसुधेयमवेक्ष्यताम्' इत्याद्युपदिशति ॥

अथ समावव्रृते कुसुमैर्नवै-
स्तमिव सेवितुमेकनराधिपम् ।
यमकुबेरजलेश्वरवज्रिणां
समधुरं मधुरञ्चितविक्रमम् ॥ स. ९. श्लो. २४.

तृणबिन्दुशापान्मानुष्यां संभूतायाः [3]सुराङ्गनायास्तनूजममरतेजसं[१] दशरथम्, इन्द्रियजये संयमीन्द्रेण[२], प्रतापे क्रौञ्चदारणेन[३], कृतकर्मणां श्रमापनयने बलनिषूदनेन[४], असन्नियमने

1. सर्ग ८. श्लोक ६९. 2. सर्ग ८. श्लोक ५२. 3. सर्ग ९:-
१. श्लो ४ २. श्लो १. ३. श्लो २. ४. श्लो ३.

यमेन[५], संपदि नरवाहनेन[६], वसुवृष्टिविसर्जने वरुणेन[७], रुचा अरुणाग्रसरेण[८], ओजसि अनलेन[९], सौम्यतायां सोमेन[१०], सश्रीकतायां पुरुषोत्तमेन[११] चोपमिमानः, शक्रसाहाय्यदानयोग्यताविष्करणायेव तस्य [1]पञ्चकृत्वः शतक्रतुना साम्यमुपपादयन्महाकविः, कोसलेश्वरस्यानवरताध्वरदीक्षासंजातासमभासि तनावष्टमूर्तेरधिवासं [2]भावयन्, देवकार्यनिर्वहणार्थं यमवतामवतां च धुरि स्थितस्य दशरथस्य निर्मलां मतिं रजसाभिभूय मृगयाभिरतिमुत्पादयितुं मधुस्तं सेवितुमिव नवैः कुसुमैः समाववृते इतिं वर्णयन्, 'सेनान्यमिच्छतां शक्रपुरोगमाणां देवाणां प्रार्थनया समाधिनिष्ठस्योमापतेश्चित्तविक्षोभाय प्रक्रान्तस्य संकल्पयोनेराज्ञया विजृम्भमाणं मधुं स्मारयति । '[3]अथ समाववृते' इत्यादिश्लोकत्रयस्य, कुमारसंभवे '[4]तस्मिन्वने संयमिनाम्' इत्यादि-

५ श्लो ६. ६. श्लो ११. ७. श्लो ६. ८. श्लो ६. ९ श्लो १५. १०. श्लो १५. ११. श्लो १६.

1. सर्ग ९. श्लो ३, १२, १३, १८, २४. 2 सर्ग ९ श्लो २१. 3. सर्ग ९ श्लो २४, २५, २६. 4. कुमारसभवः सर्ग ३.

तस्मिन्वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्ती ।
सङ्कल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे ॥ २४ ॥

कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५ ॥

पद्यत्रितयस्य चार्थसाम्यं संख्यासादृश्यं च विस्पष्टमवगम्येत सहृदयैः ॥

कुसुमजन्म ततो नवपल्लवा-
स्तदनु कोकिलषट्पदकूजितम् ।
इति यथाक्रममाविरभून्मधु-
र्द्रुमवतीमवतीर्य वनस्थलीम् ॥ स. ९. श्लो. २६.

इयं हि वनस्थल्यां यथाक्रमं मधुमासावतरणरीतिः, "[1]वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन क्रमेण कृतं ....पदम्' इति श्रीमद्भट्टबाणवचःसरणिमनुसारयति ॥

अभिनयान्परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा ।
अमदयत्सहकारलता मनः
सकलिका कलिकामजितामपि ॥ स. ९. श्लो. ३३.

अस्मिन्प्रकरणे चूतलतां नर्तकीत्वेन भावयन्, तैस्तैः प्रकारैर्वसन्तस्यान्यादृशं रामणीयकं वर्णयन्कविः ' मदजननतां मधु-

---

असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां संपर्कमाशिञ्जितनूपुरेण ॥ २६ ॥

1. कादम्बरी–पूर्वभागः–महाश्वेतावृत्तान्तः ।

मासस्य, चञ्चलप्रकृतितामिन्द्रियाणां दुर्निवारतां च विषयाभिलाषाणाम्' निपुणमवगमयति ॥

नृपतेः प्रतिषिद्धमेव त-
त्कृतवान्पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि
श्रुतवन्तोऽपि रजोनिमीलिताः ॥ स. ९. श्लो. ७४.

पूर्वं पञ्चमसर्गे '[1]तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः' इति स्वेनैव कण्ठतः प्रोक्तं शास्त्रप्रतिषिद्धं द्विरदवधरूपं कर्म कृतवतो दशरथस्यास्वतन्त्रतामनुरूपेणार्थान्तरन्यासेनाविष्करोति महाकविः ॥

मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः । स. १०. श्लो. ६४.

'[2]दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः' इति जननसमय एवैन्दुमतेयस्य भाविनमिममुत्कर्षमवगमयन्कविरत्र तमेवाशयं विवृणोतीव ॥

रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।
रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ स १०. श्लो६८.

जगद्गुरोरवतारं सभक्त्युन्मेषं श्लक्ष्णया गिरा वर्णयन्कविः

1 सर्ग ५. श्लो ५०. 2. सर्ग ८. श्लो २९.

'[1]मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः । तथाप्यनन्यपूर्वेयं तस्मिन्नासीद्वसुन्धरा ॥' इति निर्दिष्टरीत्या अन्यादृशगुणैरलंकृतं रघुं कूटस्थत्वेन भावयन्, तस्मात्प्रसुतस्य वंशस्यादिपुरुषावतारार्हतामवबोधयति । एवमेवान्यत्रापि '[2]तद्रघोरनघं कुलम् । अलमुद्योतयामासुः' '[3]रघोः कुलं कुड्मलपुष्करेण तोयेन चाप्रौढनरेन्द्रमासीत्' इति कुलस्य रघुसंबन्धेनैव प्राशस्त्यं शंसति । आदिकाव्येऽपि, 'कामार्थगुणसंपन्नं धर्मार्थगुणविस्तरम् । समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम् ॥ ८ ॥ स यथा कथितं पूर्वं नारदेन महर्षिणा । रघुवंशस्य चरितं चकार भगवानृषिः ॥ ९ ॥ इति तृतीये सर्गे पठ्यते। श्रीवाल्मीकिना वर्णिता गुणा महाकाव्येऽस्मिन्नपि उपलभ्यन्त इति तत्र तत्र प्रदर्शितमस्माभिः । श्रीरामभद्रस्यावतारकाले वर्ण्यमाना रक्षागृहगतानां दीपानां दशा, पूर्वं रघोरुदये '[4]अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा । निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव' इत्याविष्कृतां कवेः संभावनां स्मारयति ॥

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ स.१०.६९

---

1. सर्ग ४. श्लो ७, 2. सर्ग १०. श्लोक ८०. 3. सर्ग १८ श्लो ३७. 4. सर्ग ३. श्लो १५

कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
'जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् । श्लो ७०
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ श्लो ७१.

शय्यागतेन रामेण भासमानां कौसल्यां त्रिलोकपावन्या जाह्नव्या तुलयन् '[1]अर्चिता तस्य कौसल्या' इति निर्दिष्टप्रकारेण तस्या महनीयमनुभावं विशदयति । शीलवता भरतेनालंकृतां कैकेयीं प्रश्रयेणालंकृतया पूर्वं '[2]रन्ध्रचला' इति भावितया श्रियोपमिमानः कविः, '[3]प्रिया केकयवंशजा' '[4]क्रूरनिश्चया, दूषयामास कैकेयी' '[5]सा किलाश्वासिता चण्डी' इति वर्ण्यमाना लावण्यमोहितेन भर्त्रा ज्येष्ठमभिरामगुणं रामं पुरान्निर्वासयन्ती राज्यलुब्धेयम् '[6]संवर्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, निवासवलभिर्धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरःसरपताका सर्वाविनयानाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्, विसर्पणभूमिर्लोकापवादविस्फोटानाम्, वध्यशाला साधुभावस्य' इत्युपवर्णितां श्रियं सर्वथा-

---

1. स १०. श्लो ५५ 2. स ९. श्लो १५. 3. स १० श्लो ५५. 4 स १२. श्लो ४. 5 स १२ श्लो ५. 6. पूर्वकादम्बरी. चन्द्रापीडस्य शुकनासोपदेशप्रकरणम् ।

नुकरोतीत्यवगमयन्, भरतस्यान्यादृशं प्रश्रयं भावयन्, तज्जन्मनैव कैकेय्याः पूजनीयत्वं विशदयन्, श्रीमतां प्रश्रयो भूषणमित्युपदिशति। सुमित्रां च विद्यया तत्सुतौ च प्रबोधविनयाभ्यामुपमयन्कविः, तस्या विद्याया इवोपासनीयगुणवत्त्वं विशदयन्, लक्ष्मणस्य ज्ञानसंपदं शत्रुघ्नस्येन्द्रियजयमपि द्योतयन्, विद्याभ्यासस्य प्रबोधविनयाधिगम एव फलमित्युपदिशति॥

अप्यसुप्रणयिनां रघोः कुले
न व्यहन्यत कदाचिदर्थिता ॥ स. ११. श्लो. २.

[1]पूर्वमात्मनः सकाशात्काममनवाप्य वदान्यान्तरं गतोऽर्थीति परीवादमसहमानो रघुः '[2]मनीषितं द्यौरपि येन दुग्धा' इति निर्दिष्टप्रकारेण कुबेरादर्थं निष्क्रष्टुं चक्रमे किल। तदन्ववायसंभूताः सर्वेऽपि क्षितिभुजः प्राणपरित्यागेनाप्यर्थिमनोरथपूरणे निरतिशयमुद्योगमनुतिष्ठन्ति। दशरथस्य च रामलक्ष्मणौ प्राणतुल्याविति सूचयति कविः॥

मातृवर्गचरणस्पृशौ मुने-
स्तौ प्रपद्य पदवीं महौजसः।
रेजतुर्गतिवशात्प्रवर्तिनौ
भास्करस्य मधुमाधवाविव ॥ स. ११. श्लो. ७.

---

1. सर्ग ५ श्लोक २४. 2. सर्ग ५. श्लोक ३४.

यथा मधुमाधवयोर्मासयोर्भास्करस्य च परस्पराश्रयेण निरतिशया शोभानुभूयते, तथा महौजसं विश्वामित्रमनुगच्छतो रामलक्ष्मणयोर्महर्षेश्चानुभावो नितरां ववृधे इत्यनयोपमया द्योत्यते ॥

नाम्भसां कमलशोभिनां तथा
शाखिनां च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः
प्रीतिमापुरुभयोस्तपस्विनः ॥ स. ११. श्लो. १२.

इह रामलक्ष्मणयोर्वपुष्यन्यादृशं लावण्यं गाम्भीर्यं प्रसादं च साक्षात्कुर्वतां तपस्विनामननुभूतः कोऽप्यानन्दः समजनीति भावयन्कविः— कन्दमूलफलादिभिः स्वादुसलिलेन च बहूपकुर्वतां प्रच्छायशीतलानां महीरुहाणां कमलाकराणां च दर्शनेन महर्षयो मोदन्त एव । अथापि तपोविघ्नकारिभी रक्षोभिर्जनितमान्तरं सन्तापं शमयितुमिमे न समर्थाः, यथा दाशरथिनौ— इति द्योतयन्निवानन्तरमेव मदनसंनिभस्य राघवस्य सुकेतुतनयावधार्थमधिज्यकार्मुकत्वमुपवर्णयतीत्यहो ! मानसी वृत्तिर्महाकवेः ॥

वामनाश्रमपदं ततः परं
पावनं श्रुतमृषेरुपेयिवान् ।

उन्मनाः प्रथमजन्मचेष्टिता-
न्यस्मरन्नपि बभूव राघवः ॥ स. ११. श्लो. २२.

इदं किल सर्वविदितम्; यदिहानुभूतपूर्वं चरमचरं वा वस्तु यदृच्छया लोचनपथमुपयातमालोकयतो जनस्य संस्कारदौर्बल्याद्विशेषाकारेण तदिदमिति प्रत्यभिज्ञाविरहेऽपि परिचितपूर्वतया केवलमान्तरेण भावेन स्मरणं नाम। एवमेव नित्यस्य जीवात्मन एकरूपेणावस्थानात्, देशकालाद्युपाधिभेदवच्छरीरभेदेऽपि भावस्थिराणि जननान्तरसौहृदानि चेतसा सति निमित्ते स्मर्यन्त इति महाकविरयं विश्वसिति। इममेवाशयमन्यत्रापि "[1]मनो हि जन्मान्तरसंगतिज्ञम्' '[2]रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः। तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि' इत्यसकृद्विवृणोति। एवमेव भूषणबाणेनापि, यदृच्छयाच्छोदसरस्तीरोपान्तमागतस्य पूर्वस्मिञ्जन्मनि पुण्डरीकशरीरकेणात्मनानुभूतपूर्वं लतामण्टपादिकमवलोकयतः स्मरणाभावेऽपि नितरां पर्युत्सुकस्य वैशम्पायनस्यावस्था वर्ण्यते। तथा हि—"[3]दृष्ट्वा च तमतिचिरान्तरितदर्शनं भ्रातरमिव तनयमिव सुहृदमिवानन्यदृष्टिर्विस्मृतनिमेषेण चक्षुषा विलोकयन्स्तम्भित इव........समुपविश्य भूमौ किमप्यन्तरा-

---

1. सर्ग ७. श्लो १५ 2. शाकुन्तल–अङ्क—५. श्लो २. 3 उत्तरकादम्बरी।

**त्मना स्मरन्निवानुध्यायन्निव** निर्विकारवदनो गलितलोचन-पयोधारासन्तानस्तूष्णीमधोमुखस्तस्थौ ।' पुनरपि तस्य जननान्तरप्रेयस्या महाश्वेताया दर्शनसमयेऽप्यनुभूता दशा तथैव निगद्यते—'स तु मामुपसृत्यानन्यदृष्टिरदृष्टपूर्वोऽपि प्रत्यभिजानन्निव, असंस्तुतोऽपि चिरपरिचितइव, असंभावितोऽप्युपारूढप्रौढप्रणय इव, अस्निग्धोऽपि परवानिव, प्रेम्णा शून्योऽपि किमप्यनुस्मरन्निव दुःखिताकारोऽपि सुखायमान इव,....अनुस्मरन्निव विस्मृतमनिमेषेण निश्चलस्तब्धपक्ष्मणा अन्तर्बाष्पपूरार्द्रेण कर्णान्तचुम्बिना विकसितेनामुकुलिततारकेण चक्षुषा....सुचिरमालोक्याब्रवीत्' इति ॥

आशिषामनुपदं समस्पृश-
द्दर्भपाटलपुटेन पाणिना ॥ स. ११. श्लो. ३१.

मखद्विषां रक्षसां जेतारं नवे वयसि वर्तमानं सानुजं राघवं स्नेहार्द्रेण पाणिना संस्पृशन् कौशिकः, क्रतुविघ्नकारिणं वासवमाकुलीकृतवन्तं कुमारं रघुं [1]हर्षजडेन पाणिना परामृशन्तं दिलीपं स्मारयति ॥

विद्रुतक्रतुमृगानुसारिणं
येन बाणमसृजद्वृषध्वजः ॥ स. ११. श्लो. ४४.

---

1. सर्ग ३. श्लोक ६८.

इदं हि '[1]मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम्' इति शाकुन्तलोक्तमनुस्मारयति ॥

शैलसारमपि नातियत्नतः
पुष्पचापमिव पेशलं स्मरः ॥ स. ११. श्लो. ४५.

पेशलेनानेनोपमानेन कविः, सलीलं पिनाकारोपणमनुष्ठितवतो राघवस्यानुत्तमं लावण्यं विस्मृतनिमेषेण चक्षुषा सस्पृहमापिबन्त्या मैथिल्या मदनपरायत्तचित्तवृत्तितामवबोधयतीव ॥

दृष्टसारमथ रुद्रकार्मुके
वीर्यशुल्कमभिनन्द्य मैथिलीम् ।
राघवाय तनयामयोनिजां
रूपिणीं श्रियमिव न्यवेदयत् ॥ स. ११. श्लो ४७.

मैथिलीं सपदि सत्यसंगरो
राघवाय तनयामयोनिजाम् ।
सन्निधौ द्युतिमतस्तपोनिधे-
रग्निसाक्षिक इवातिसृष्टवान् ॥ स ११. श्लो ४८.

प्रायेण समार्थकमिदं श्लोकद्वयम्। प्रथमं 'रूपिणीं श्रियमिव' इति संभावितां सीतां राघवाय जनको न्यवेदयदिति

1. शाकुन्तलम् अङ्क १. श्लोक ५.

वर्णयन् अनुपदमेवानौचित्यमाकलयन्निव, गुरोरनुज्ञां प्रतीक्षमाणाय कुमाराय महौजसं विश्वामित्रं पुरस्कृत्य मैथिलेन कन्यकायाः पुनर्निवेदनं शसन् कौशिकमग्निना तुलयन्कविः, आदौ वाचा दानं पश्चात् अग्निसाक्षिकं प्रदानं चाविरुद्धमित्यवबोधयतीव । वाल्मीकिनापि सीता '[1]श्रीरिव रूपिणी' इति निर्दिष्टा ॥

तौ समेत्य समये स्थितावुभौ
भूपती वरुणवासवोपमौ ॥ स. ११. श्लो ५३. ॥

विदेहतः प्रतीच्यां दिश्युत्तरकोसलानामवस्थितिं जानन्नसौ कविः, दशरथं वरुणेन विदेहाधिपं च वासवेन तुलयन्, भूपतिशब्देनेमं स्वाशयमभिव्यञ्जयतीति अहो! देशसंस्थानाभिज्ञता महाकवेः ॥

पावकस्य महिमा स गण्यते
कक्षवज्ज्वलति सागरेऽपि यः ॥ स ११. श्लो ७५.

इह रामभद्रं सागरेणात्मानं च पावकेन सदृशयन्भार्गवः, '[2]प्रत्युवाच तमृषिर्न तत्त्वतस्त्वां न वेद्मि पुरुषं पुरातनम्' इति वक्ष्यमाणरीत्या भाविनमात्मनो जयविपर्ययं सूचयतीव ॥

पूर्वजन्मधनुषा समागतः
सोऽतिमात्रलघुदर्शनोऽभवत् ।

1. रामायणे-बालकाण्डे-७७. सर्गे २९. श्लो । 2 स ११. श्लो ८५.

केवलोऽपि सुभगो नवाम्बुदः
किं पुनस्त्रिदशचापलाञ्छितः ॥ स ११. श्लो ८०.

यथैवेन्द्रधनुषः कालमेघ एव स्पष्टतया सुसंस्थितिर्विभाव्यते, तथैव वैष्णवं धनू रामभद्रस्य हस्ते संगतं रमणीयदर्शनमासीदिति द्योतयन्, 'पूर्वजन्मधनुषा' इत्यनेन भार्गवसकाशाच्छरासनमाददानो दाशरथिरस्मरन्नपि चिरान्तरितदर्शनस्यात्मीयस्येष्टतमस्य वस्तुनः समागमेनैवान्तस्तोषमवापेति सूचयति कविः। वर्षागमे नवाम्बुदानीकमुहूर्तमण्डनस्य धनुराकारेणाम्बरतले परिदृश्यमानस्य तेजःपुञ्जस्यावलोकनेन कविरनितरसाधारणं कौतुकमावहन्, तत्र तत्र रामणीयकप्रस्तावप्रसङ्गेषु [1]असकृदिदमेवोपमानत्वेन निर्दिशन् '[2]इन्द्रधनुर्दर्शने कमप्यनुभवदवर्णनीयं प्रमोदं नृत्यतीव मे मानसम् इति वादिनमाङ्गलकविमनुस्मारयति ॥

नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक्। स १२. श्लो १८.

अनया ह्युपमया, शीलवतो भरतस्य भोगपराङ्मुखतामधर्मभीरुतां दृढभक्तितां च ज्यष्ठे व्यञ्जयन्, '[3]अद्धा श्रियं पालित-

---

1. सर्ग ११ श्लो ४३ ; सर्ग ४ श्लो १६ ; सर्ग ३ श्लो ५३.

2 *Wordsworth* — 'My heart leaps up when I see the rainbow.'

3. सर्ग १३ श्लो ६५

मंगराय प्रत्यर्पयिष्यत्यनघां स साधुः ।' इति श्रीरामभद्रमुखेनेममाशयं पुनरपि निपुणमनुसंदधाति कविः ॥

प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ स. १२. श्लो. २५.

यथैव निदाघान्ते श्यामाभ्रान् दिवसानालोकयन्तीनां प्रजानाममन्द आनन्द उपजायते, तद्वदाश्रमोपान्तेषु चरन्तं राघवमालोकयतां तपस्विनाम् '[1]रावणावग्रहक्लान्तमिति वागमृतेन सः । अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥' इत्युक्तरीत्या कोऽपि वाग्विषयातीतः प्रमोदः समजनीति बोधयन्, वर्षर्तोर्निरतिशयाह्लादकत्वं [2]तत्र तत्र निर्दिशति कविः । अनावृष्टिजनितशोषेणासकृत्ताम्यद्भिर्भारतवर्षीयैर्मेघालोके कीदृशं सुखमनुभूयत इति शीतदेशनिवासिनो द्वीपान्तरस्था न जानीयुः । अत्र मल्लिनाथो वर्षाभ्यः ठक्प्रत्ययागममेवासकृदनुसारयति ॥

त्वं रक्षसा भीरु यतोऽपनीता
तं मार्गमेताः कृपया लता मे ।
अदर्शयन्वक्तुमशक्नुवत्यः
शाखाभिरावर्जितपल्लवाभिः ॥ स. १३. श्लो. २४.

1. सर्ग १०. श्लो ४८ 2. सर्ग १२. श्लो २९; स-११-८३; स-१५-५८; स-१८-६.

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा-
स्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्या-
मुत्पक्ष्मराजीनि विलोचनानि ॥ स. १३. श्लो. २५.

इह जानक्याः सर्वात्मना लतासाम्यं मृगीसादृश्यं च शब्दतोऽनुपात्तमप्यभिव्यज्यत इति सहृदया जानन्ति । उत्तमनायिकाया लतात्वेन मृगीत्वेन च रूपणम् '[1]दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः', '[2]सर्वः सगन्धेषु विश्वसिति' इत्यादावुपलभ्यते । सहसंवर्धितास्वनेकासु लतासु मृगीषु वा एकस्या अदर्शने निमित्तमितरा एव प्रष्टव्या इति कृत्वा राघवेण सीताया मार्गं पृष्टा वीरुधो हरिण्यश्च आवर्जितपल्लवाभिः शाखाभिर्विलोचनव्यापारैश्च अदर्शयन्निवेति सम्भावयति कविः । रामायणे च '[3]मल्लिका माधवीश्चैव चम्पकान्केतकीस्तथा । पृच्छन्रामो वने भ्रान्त उन्मत्त इव लक्ष्यते ॥ अथ वा मृगशावाक्षीं मृग जानासि मैथिलीम् । मृगविप्रेक्षणी कान्ता मृगीभिः सहिता भवेत्' इति दृश्यते । मल्लिनाथस्तु, अत्रोत्प्रेक्षाव्यञ्जकानामिवादिपदानामदर्शनेन 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसम-

1. शाकुन्तले अङ्कः १. श्लो १५. 2. शाकुन्तले अङ्कः ५. 3. आरण्यकाण्ड—सर्ग ६०—२२, २३.

न्विताः' इति वचनबलेन च सत्यमेव लताः कृपालवो भूत्वा मार्गमदर्शयन्नित्यभिप्रैति ॥

एषा प्रसन्नस्तिमितप्रवाहा
सरिद्विदूरान्तरभावतन्वी ।
मन्दाकिनी भाति नगोपकण्ठे
मुक्तावली कण्ठगतेव भूमेः ॥ स. १३. श्लो. ४८.

रामभद्रेण सार्धं विमानारूढः कविरम्बरतलात्सुदूरमवलोकयन्, चित्रकूटोपकण्ठे प्रवहन्तीमतिदवीयस्तया तनुतयावभासमानां मन्दाकिनीं पृथिवीवनितायाः कण्ठमुक्तावलीत्वेनोत्प्रेक्षमाणः, 'नगोपकण्ठे' इत्यनेन शृङ्गाग्रलग्नैर्नवाम्बुदैरावृता रमणीयाश्चित्रकूटोपान्तस्थलीः रत्नाकरमेखलाया देव्या भूमेर्निरन्तरपयोधरत्वेन हृदये संभावयतीव ॥

उपस्थितां पूर्वमपास्य लक्ष्मीं
वनं मया सार्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषा-
त्सोढास्मि न त्वद्भवने वसन्ती ॥ स. १४. श्लो ६३.

जानक्याः पतिगृहाद्विवासनं सपत्नीत्वेन भावितया लक्ष्म्या कृतमित्युत्प्रेक्षमाणः कविः, आदौ '[1]उपस्थितश्चारु वपुस्तदीयं

1. सर्ग १४. श्लोक २४.

कृत्वोपभोगोत्सुकयेव लक्ष्म्या' इत्यारभ्य, अनुपदमेव '[1]प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखान्यभूवन्' इति सीताविवासनस्य बीजमिवोपक्षिपन्, क्रमेण रामस्य तादृशं कठोरव्यवसायं '[2]त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव' इति वर्णयन्, सर्गावसाने च '[3]वक्षस्यसंघट्टसुखं वसन्ती रेजे सपत्नीरहितेव लक्ष्मीः' इत्युपसंहरन्, अत्र प्रदर्शितमाशयमुपबृंहयतीव। 'सोढास्मि न त्वद्भवने वसन्ती' इतीहोपक्षिप्य, अन्यत्र '[4]कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः' इत्युपसंहरति ॥

तामभ्यगच्छद्रुदितानुसारी
कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनोत्थः
श्लोकत्वमापद्यत यस्य शोकः ॥ स.१४. श्लो.७०.

मधुमयफणितीनां मार्गदर्शिनं कारुणिकं मुनिं 'कविः' इति निर्दिशन्, तस्य सूक्तिष्वन्यादृशमात्मनो रसानुभवं व्यञ्जयन्, कवेर्लक्षणं च सूचयतीव। तथा हि—यो हि दुःखाभिषङ्गैराकुलीक्रियमाणस्य यस्य कस्यापि चेतनस्य करुणामवस्थां निरीक्ष्यानुप-

1. सर्ग १४. श्लो २५. 2. सर्ग १४. श्लोक ३९. 3. सर्ग १४ श्लो ८६. 4. सर्ग १४. श्लो ८४

दमेव समधिकदुःख इव विस्मृतान्यकरणीयो रोदिति; दयालुतां वा दर्शयति; यस्य च करुणार्थग्रथितैर्मधुमयफणितिभिः पृथिवीरुहा अपि स्रुतशाखारसबाष्पदूषिता भवन्ति; स एव कविर्नान्ये—इति। अन्यत्रापि '[1]वाल्मीकिरादाय दयार्द्रचेताः', '[2]कविः कारुणिको वव्रे', '[3]स्वकृतिं गापयामास कविप्रथमपद्धतिम्', '[4]तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ। हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली ॥' इत्यादिना कवेस्तत्सुभाषितस्य च स्वरूपं सम्यगवगमयति ॥

तमश्रु नेत्रावरणं प्रमृज्य<br>
सीता विलापाद्विरता ववन्दे ।<br>
तस्यै मुनिर्दोहदलिङ्गदर्शी<br>
दाश्वान्सुपुत्राशिषमित्युवाच ॥ स. १४. श्लो. ७१.

इह वन्दमानायै जानक्यै सुपुत्राशिषं दाश्वांसम्, वैदेह्याः करुणामवस्थां प्रणिधानतः सम्यगवगच्छन्तम्, तदनघप्रसूतेरपत्यसंस्कारविधिं करिष्यन्तं वाल्मीकिम् '**मुनिः**' इति निपुणं निर्दिशन् सीताया भाविनीमपत्यसम्पत्तिम् 'अनघा प्रसूतिः' इति भावयन् '[5]कच्चिन्मृगीणामनघा प्रसूतिः' इति पूर्वोक्तं स्मारयन्,

1. स १४. श्लो ७९. 2. स १५. श्लो ७१. 3. स १५ श्लो ३३. 4. स १५. श्लो ६६. 5 स ५. श्लो ७.

मैथिल्या मृगीसादृश्यमपि ध्वनयतीत्यहो ! शब्दप्रयोगचातुरी महाकवेः ॥

तत्र सौधगतः पश्यन्यमुनां चक्रवाकिनीम् ।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ स.१५. श्लो.३०.

[1]पूर्वं प्रभालेपिभिरिन्द्रनीलैरनुविद्धेवेत्युत्प्रेक्षितां यमुनाम् अत्र देव्या भूमेः प्रवेणीत्वेन भावयन्. कण्ठमुक्तावलीत्वेन भाविताया: शरदभ्रधवलाया भागीरथ्या वर्णनमनुस्मारयति ॥

स मुहूर्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम् ।
यानं सस्मार कौबेरं वैवस्वतजिगीषया ॥ स. १५.श्लो.४५.

आत्तशस्त्रस्तदध्यास्य प्रस्थितः स रघूद्वहः ।
उच्चचार पुरस्तस्य गूढरूपा सरस्वती ॥ स. १५. श्लो. ४६.

इह वैवस्वतमभियास्यन्राघवः, "[2]द्वित्राण्यहान्यर्हसि सोढुमर्हन्' इति द्विजमाश्वासयन्तं सर्वतोऽप्यप्रतिहतगमनेन कल्पितशस्त्रगर्भेण रथेन कुबेरमभियान्तं रघुमनुकरोतीव ॥

जनास्तदालोकपथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ स.१५. श्लो.७८.

कुशलवमुखाद्रामायणश्रवणेनैव लङ्कायां भूतपूर्वं वृत्तं सम्य-

1. सर्ग १३. श्लो ५४. 2. सर्ग ५. श्लो २५.

गवगतवतां मिथ्यापवादकथनेनात्यन्तं लज्जमानानामवनतमुखानां ज्ञनानामवस्थामनुरूपेणोपमानेनात्र विशदयन्, "[1]आपादपद्मप्रणताः कलमा इव' इति पूर्वोक्तमुपमानं स्मारयन्, जानक्याः पादपद्मयोः प्रणिपतनेन निष्कृतिमकुर्वन्निव जना इति कविर्ध्वनयति ॥

आधूय शाखाः कुसुमद्रुमाणां
स्पृष्ट्वा च शीतान्सरयूतरङ्गान् ।
तं क्लान्तसैन्यं कुलराजधान्याः
प्रत्युज्जगामोपवनान्तवायुः ॥ स. १६. श्लो. ३६.

कुलराजधान्या वल्लभस्यागमनमभिनन्दितुं प्रेषित इवाप्तः क्लान्तसैन्यं कुशं प्रत्युद्गच्छन्सरयूनिर्झरशीकराणां वोढा नभस्वान्, "[2]दूरे वसन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव' इति रामभद्रेणात्रैवानुभूतं शिशिरानिलं स्मारयति ॥

पूराबभासे विपणिस्थपण्या
सर्वाङ्गनद्धाभरणेव नारी ॥ स. १६. श्लो. ४१.
वसन्स तस्यां वसतौ रघूणां
पुराणशोभामधिरोपितायाम् ।

1 सर्ग ४. श्लोक ३७ 2. सर्ग १३. श्लोक. ६३.

न मैथिलेयः स्पृहयांबभूव
भर्त्रे दिवो नाप्यलकेश्वराय ॥ स. १६. श्लो. ४२.

कविरिह '[1]वस्वौकसारामभिभूय साहं सौराज्यबद्धोत्सवया विभूत्या। समग्रशक्तौ त्वयि सूर्यवंश्ये सति प्रपन्ना करुणामवस्थाम्।' इत्याद्यतिकरुणं विलपन्त्याः प्रवासस्थकलत्रवेषायाः कुलराजधान्या मनोरथाः सद्यः संपूर्णाः कुशागमनेनेति द्योतयति॥

अगस्त्यचिह्नादयनात्समीपं
दिगुत्तरा भास्वति संनिवृत्ते।
आनन्दशीतामिव बाष्पवृष्टिं
हिमस्रुतिं हैमवतीं ससर्ज ॥ स. १६. श्लो. ४४.

अत्र प्रोषितप्रियसमागमेन मुदिताया उत्तरदिग्वनिताया हिमस्रुतिमानन्दबाष्पवर्षत्वेन भावयन्कविः, सद्यो वल्लभविरहेण ताम्यन्त्या दीर्घमुष्णं च निःश्वसत्या दक्षिणादिगङ्गनायाः स्थितिमिहावर्णयन्नपि कुमारसंभवे 'कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य। दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज' इति निपुणं निर्दिशन्, इह भास्वतः क्लृप्तसमयानतिक्रमणाद्दक्षिणाशायाः सन्तापावसरो नास्तीत्यवगमयन्सहृदयान्मोदयति महाकविः॥

---

1. सर्ग १६. श्लोक १०

धूमादग्नेः शिखाः पश्चादुदयादंशवो रवेः ।
सोऽतीत्य तेजसां वृत्तिं सममेवोत्थितो गुणैः॥ स.१७.श्लो.३४.

नेयमत्युक्तिः । पूर्वे रघुवंशीया राजानः प्रायेणादौ यौवराज्यधुरां वहन्तो गुणैः प्रजा रञ्जयित्वानन्तरमेव मूर्धाभिषिक्ता आसन् । कौमुद्वतेयस्तु कौमार एवाधिराज्यप्राप्त्या देदीप्यमानो गुणैर्लोकानन्वरञ्जयदिति कृत्वा सत्यमेव तेजसां वृत्तिमतिचक्रामासौ कुमार इति बोधयन्निममेवाशयं पुनरपि '[1]यावन्नाश्यायते वेदिरभिषेकजलाप्लुता । तावदेवास्य वेलान्तं प्रतापः प्राप दुःसहः ॥' इत्यादौ प्रकारान्तरेण विशदयति ॥

वसिष्ठस्य गुरोर्मन्त्राः सायकास्तस्य धन्विनः ।
किं तत्साध्यं यदुभये साधयेयुर्न संगताः॥ स.१७.श्लो.३८.

इदं च, '[2]तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः । प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः' इति दिलीपोक्तं स्मारयति ॥

इत्थं जनितरागासु प्रकृतिष्वनुवासरम् ।
अक्षोभ्यः स नवोऽप्यासीद्दृढमूल इव द्रुमः ॥ स१७.श्लो४४.

इदं चोपमानं '[3]अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् । नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम्' इति मालविकाग्निमित्रे प्रकारान्तरेणोपपादितं दृश्यते ॥

1. सर्ग १७. श्लोक ३७ 2. सर्ग १ श्लोक ६१. 3. अङ्क १. श्लो६.

मणौ महानील इति प्रभावा-
दल्पप्रमाणेऽपि यथा न मिथ्या ।
शब्दो महाराज इति प्रतीत-
स्तथैव तस्मिन्युयुजेऽर्भकेऽपि ।। स. १८. श्लो. ४२.

अत्र कविः, अर्भके महाराजशब्दयोगमनुरूपेण सहृदयहृदयावर्जकेनोपमानेन विशदयन्. अतिशयोक्त्याद्यलङ्कारेष्वात्मनोऽनभिरुचिमपि ध्वनयति ॥

पर्यन्तसंचारितचामरस्य
कपोललोलोभयकाकपक्षात् ।
तस्याननादुच्चरितो विवाद-
श्चस्खाल वेलास्वपि नार्णवानाम् ॥ स. १८. श्लो.४३.

निरपराधमधुरवयसि वर्तमानोऽपि सुदर्शनः सौराज्यमकरोत् । अर्णवानां वेलास्वपि तदाज्ञाभङ्गो नासीदिति कथयन्, साकेतादर्णवानां सुदूरमन्तरमासीदिति सूचयति ॥

शिरीषपुष्पाधिकसौकुमार्यः
खेदं स यायादपि भूषणेन ।
नितान्तगुर्वीमपि सोऽनुभावा-
द्धुरं धरित्र्या बिभरांबभूव॥ स. १८. श्लो. ४५.

न्यस्ताक्षरामक्षरभूमिकायां
कार्त्स्न्येन गृह्णाति लिपिं न यावत् ।
सर्वाणि तावच्छ्रुतवृद्धयोगा-
त्फलान्युपायुङ्क्त स दण्डनीतेः ॥ स. १८. श्लो. ४६.

इदमपि वस्तुकथनमेव । आपाततोऽप्यत्युक्तिशङ्कां परिहर्तुकामः कविः, 'अनुभावात्' इति पदं प्रयुञ्जानो नवीनान्प्राचीनांश्चालङ्कारिकांत्रसयति । एवमेवोपर्यपि 'श्रुतवृद्धयोगात्' इति निर्दिशन्, सुदर्शनस्य आ बाल्यात् ज्ञानवृद्धैः सह वसतिं ज्ञापयन्, विद्याभ्यासादपि सत्सङ्गतिः शतगुणं फलं प्रसूते इत्युपदिशति ॥

उरस्यपर्याप्तनिवेशभागा
प्रौढीभविष्यन्तमुदीक्षमाणा ।
संजातलज्जेव तमातपत्र-
च्छायाच्छलेनोपजुगूह लक्ष्मीः ॥ स. १८. श्लो. ४७.

अयमाशयः पूर्वमेव प्रकारान्तरेण '[1]छायामण्डललक्ष्येण तमदृश्या किल स्वयम् । पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम्' इत्यत्र प्रादर्शि ॥

---

1. सर्ग ४. श्लो ५.

दृष्टदोषमपि तन्न सोऽत्यज-
त्सङ्गवस्तु भिषजामनाश्रवः ।
स्वादुभिस्तु विषयैर्हृतस्ततो
दुःखमिन्द्रियगणो निवार्यते ॥ स. १९. श्लो.४९.

तस्य पाण्डुवदनाल्पभूषणा
सावलम्बगमना मृदुस्वना ।
राजयक्ष्मपरिहानिराययौ
कामयानसमवस्थया तुलाम् ॥ स. १९. श्लो. ५०.

इह महाकविः, 'इन्द्रियहरिणहारिणी च सततदुरन्तेयमुपभोगमृगतृष्णिका ।' असंस्कृतमतीनां 'तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । कुसुमशरशरप्रहारजर्जरिते हि हृदि जलमिव गलत्युपादिष्टम्' इत्यादि सनिदर्शनमुपदिशन्, अग्निवर्णमात्मसात्कुर्वतीं राजयक्ष्मपरिहानिं कामयमानसमवस्थया तुलयन्, भोगेष्वरतिं जुगुप्सां च निपुणं सम्पादयति विवेकिनाम् ॥

व्योम पश्चिमकलास्थितेन्दु वा
पङ्कशेषमिव घर्मपल्वलम् ।

राज्ञि तत्कुलमभूत्क्षयातुरे
　　वामनार्चिरिव दीपभाजनम् ॥ स. १९. श्लो. ५१.

राजयक्ष्मणा ग्रस्यमानेनापुत्रेणाग्निवर्णेन शोचनीयां दशामापन्नं रघोः कुलम्, अद्य श्वो वा अभावं गमिष्यन्त्या इन्दोरन्त्यकलया सनाथेनाम्बरतलेनोपमयन्. अप्रतीकारदारुणेनामयेनाविष्टस्यौषधीनाथेन तुलनायामनौचित्यमाकलयन्निव. पङ्कशेषेणादर्शनीयेन पल्वलेन सदृशयन्, अनुपदमेव [1]'तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः' इति पूर्वोक्तं स्मरन्, मलिनकर्मणोऽप्यग्निवर्णस्य परम्परया वैष्णवतेजःसंभवत्वं मनसिकृत्य पुनरपि तमेवान्ववायम् 'वामनार्चिरिव दीपभाजनम्' इत्युपमिमीते ॥

एवमसौ महाकविः, तत्र तत्रानुरूपोपमानयोजनेन स्वाभिप्रायं व्यञ्जयन्, वैवस्वतमनोरङ्कुरितस्य इक्ष्वाकुमान्धातृसगराद्यम्बरलेखिशिखरैरुपचितस्य वसिष्ठवामदेवादिब्रह्मर्षिद्विरेफैरलंकृतस्य वैष्णवेन तेजसाप्यायितैः ककुत्स्थादिभिः किसलयैर्वासितदिङ्मुखस्य भानुवंशसहकारस्य, दिलीपः पुष्पोद्गमः, रघुः फलम्, अजो न द्वयम्, तथा दशरथः प्रसूनम्, राघवः फलम्, कुशो न द्वयम्, तदनु प्रायेण दिलीपमनुकुर्वन्कौमुद्वतेयः कुसुमम्,

1. स १९. श्लो ४८.

अनन्तरजाताः सर्वेऽपि नीरसाः शलाटव एवेति निपुणं सूचयन्, कालेन तस्य शाखिनः फलोत्पादनाक्षमतां ध्वनयन्, सुदर्शनं चरमकुसुमत्वेन भावयन्, गृहोपवने गूढमग्निसात्कृतेन अग्निवर्णेन सहैवास्य चिरन्तनस्य शाखिनो भस्मीकरणमुपपादयन्, कनककुम्भमुखोज्झितेन शिशिरेण वंशाभिषेकविधिना निर्वापितं गर्भं दधानां राज्ञीं नभोबीजमुष्टिं दधानया क्षित्या तुलयन्, "[1]कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति' इत्युक्तरीत्या अग्निवर्णेन सहैव भस्मावशेषितात्सहकारात्सजातीयस्य चूताङ्कुरस्य भाविनीमुत्पत्तिं सूचयन्, काव्यमुपसंहरतीत्यहो! मानसी वृत्तिर्महाकवेः ॥

महाकाव्येऽस्मिन्प्रयुक्तानामुपमानां गाम्भीर्यस्वारस्यौचित्यादिकं वचसामुदारता च सत्यमेव वाग्विषयातीतं स्वानुभवैकवेद्यं सहृदयैः ॥

अथास्य महाकवेः कीदृशमाध्यात्मिकं मतम्? तच्च कथमवगम्यते? इत्यादिकमिदानीं विमर्शवर्तनीमाधिरोहति। काव्येऽस्मिन्कविस्तत्र तत्र जीवब्रह्मणोः स्वरूपम्, जीवात्मनः कर्मफलभोक्तृत्वम्, परमात्मनश्चान्तर्यामित्वेनौदासीन्येन च सर्वत्रावस्थितिम्प्रवृत्तिनिवृत्तिषु प्राणिनां जन्मान्तरीयसंस्कारवशगत्वम्, पर-

1 स १. श्लो ८०

मात्मनश्च जीवानां विषये वैषम्यनैर्घृण्याभावम्, कर्मणामल्पास्थिरफलवत्त्वम्, फलाभिसन्धिरहितेन मनसानुष्ठितानां कर्मणाम् अनपायिपदोपलब्ध्युपायत्वं चोपपादयन्, योगसमाधिनान्तर्यामिनः पुरुषस्य साक्षात्कारे एव स्वस्याभिसंधिमसकृदाविष्करोति। तथा हि—आत्मज्ञोऽयं महाकविः '[1]प्रलयस्थितिसर्गाणामेकः कारणतां गतः' इति ब्रह्मणो जगत्कारणत्वं वर्णयन् '[2]प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमातव । आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥' '[3]महिमानं यदुत्कीर्त्य तव संह्रियते वचः । श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥' इत्यादिना परमात्मनः स्वरूपतो गुणैश्चापरिच्छेद्यतामवाङ्मनसगोचरं महिमानं चावबोधयन्, 'जन्माद्यस्य यतः' 'शास्त्रयोनित्वात्' इत्यादि श्रीमद्बादरायणसूत्रं विवृणोतीव ॥

'[4]त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् । तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥' '[5]शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः । पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥' '[6]हृदयस्थमनासन्नमकामं त्वां तपस्विनम् । दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥' इत्यादिना परमात्मनः 'तत्सृष्ट्वा तदेवानु-

1. कुमारसम्भवः सर्ग २. श्लोक ६. 2. सर्ग १०. श्लोक २८. 3. सर्ग १०. श्लो ३२ 4. कुमारसम्भवः. सर्ग २. श्लोक १३ 5. सर्ग १०. श्लोक २५. 6. सर्ग १०. श्लोक १९.

प्राविशत्' इत्युक्तरीत्या चराचरेष्वन्तर्यामित्वेनावस्थानेऽपि निर्विकारत्वमुपपादयन्, 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा।' 'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः। अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले। समस्तकल्याणगुणाकरोऽसौ। परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे।' इत्यादिकां दिव्यां भारतीमनुसंदधातीव ॥

अथ देहिनो जीवस्य स्वकर्मवशगत्वम् '[1]परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्' इत्युपदिशन्, '[2]स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा।' इति देहे आत्मत्वभ्रान्तिं वारयन्, '[3]मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः। क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥' इति शरीरशरीरिणोः सम्बन्धः कादाचित्क इति द्योतयन्, '[4]कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः। ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥' इत्यादिना 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' इत्यादिपाराशर्यवचःसुधास्वादमभिव्यञ्जयन्, '[5]जीवानां द्रुपदादिमत्त्वमयतां स्वर्गापवर्गास्पदं देहं दत्तवति श्रियः प्रियतमे नैवो-

---

1. स ८. श्लो ८५. 2. स ८. श्लो ८९ 3. स ८. श्लो ८७
4. स १४. श्लो ६२. 5. विश्वगुणादर्शः

पकारस्मृतिः । दुःखे जातुचिदागते स्वकलिताद्दुष्कर्मणः पङ्क्तिमात्रार्थे हन्त निरागसि व्यसनिभिर्नैर्घृण्यमारोप्यते ॥' इत्यभियुक्तोक्तिमनुस्मारयति ॥

आदिपूरुषस्य लीलाविभूतेश्चिदचिदात्मकस्य जगतः '[1]ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति' इत्यादिना श्रुतिप्रोक्तं सृष्टिप्रकारमुदाहरन्. देहाज्जीवात्मनो व्युत्क्रमणे मनसोऽपि सह प्राणैर्व्युत्क्रमण '[2]मनो हि जन्मान्तरसंगतिज्ञम्' इत्यादिनावबोधयन्, 'तन्मनःप्राण उत्तरात्' इति वैयासिकसूत्रं स्मरणपथमुपनयति ॥

'[3]द्यामार्जितां कर्मभिरारुरोह' '[4]जगाम यज्वा यजमानलोकम्' इत्यादिना कर्मणां स्वर्गप्राप्तिफलकत्वं प्रतिपादयन्, '[5]अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः' इति त्रिदशलोकेऽपि जीवात्मनोऽरिषड्वर्गेण पराभवं ध्वनयन्, '[6]पीडयिष्यति न मां खिलीकृता स्वर्गपद्धतिरभोगलोलुपम्' '[7]विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निस्पृहोऽभवत्' इति स्वर्गौकसामपि भोगलोलुपत्वं विशदयन्, '[8]तं न्यमन्त्रयत

1. स १३ श्लो ६०. 2. स ७. श्लो १५. 3 स १८ श्लो ३. 4. स १८. श्लो १२ 5. स ७. श्लो ५३. 6. स ११. श्लो ८७. 7. स ८. श्लो १०. 8. स ११. श्लो ३२.

संभृतक्रतुर्मैथिलः,' '[1]यूपवत्यवसिते क्रियाविधौ,' इत्येकत्र क्रत्वनुष्ठाननिरतत्वेनोपवर्णितं मिथिलेश्वरमन्यत्र '[2]सतां भवोच्छेदकरः पिता ते' इति निर्दिश्य 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति श्रीभगवद्वचनं जनकस्य सकाशान्महर्षीणामात्मतत्त्वोपदेशाधिगमकथाश्च स्मारयन्, '[3]त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम्। गतिस्त्वं वीतरागाणामभूयःसन्निवृत्तये।' इति फलाभिसंधिरहितेन विशुद्धेन मनसानुष्ठितानां क्रतूनां मुक्तिप्राप्तिफलकत्वमुपदिशति ॥

'[4]इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना' इत्यनेन 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति गीताचार्यभाषितमनुसंदधानः, '[5]अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः,' '[6]अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान्,' '[7]न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात्,' '[8]तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः,' '[9]स गत्वा सरयूतीरं देहत्यागेन योगवित्' इत्यादिना योगानुष्ठानस्य प्राशस्त्यं बोधयन्, '[10]न हि तेन पथा तनुत्यजस्तनयावर्जितपि-

1. स ११. श्लो ३७ 2. स १४. श्लो ७४. 3. स १० श्लो २७ 4. स ८. श्लो २० 5. स ८. श्लो १७. 6. स ८. श्लो १९ 7. स ८. श्लो २२. 8. स ८. श्लो २४. 9. स १५. श्लो ९५. 10. स ८ श्लो २६.

ण्डकाङ्क्षिणः' इति योगानुष्ठानेन विद्यानिष्पत्तिमधिगत्य तनुं त्यजतामौर्ध्वदेहिकाक्रियाकिञ्चित्करीत्युपपादयन्, '[1]महीं महेच्छः परिकीर्य सूनौ मनीषिणे जैमिनयेऽर्पितात्मा। तस्मात्सयोगादधिगम्य योगमजन्मनेऽकल्पत जन्मभीरुः ॥' इत्यादिना योगानुष्ठानरूपोपाये एवात्मनोऽभिसंधिमवगमयन्नपि, '[2]बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः । त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥' इत्यत्र मोक्षप्राप्तौ नैकविधमुपायमूरीकरोति । तत्र '[3]मारुतिः सागरं तीर्णः संसारमिव निर्ममः' इति सर्वेष्वप्युपायेषु निर्ममत्वस्यावश्यकत्वम् '[4]इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी' '[5]तत्त्वार्थेन नुदंस्तमः' इत्यादिना इन्द्रियजये तत्त्वज्ञानस्य साधनत्वं च बोधयति ॥

'[6]सत्यामपि तप सिद्धौ नियमापेक्षया मुनिः' '[7]स्वसिद्धिं नियमैरिव' इत्यादिना मुमुक्षुभिरपि योगानुष्ठाननिरतैरपि विद्यानिष्पत्तिमधिगतवद्भिरपि तत्तदाश्रमकर्माण्यहरहरनुष्ठेयानीति सम्यगुपदिशन्, चतुर्भिर्वर्णैरनुष्ठेयान्धर्मान्प्रदर्शयन्तीषु स्मृतिषु '[8]श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' इत्यादिना नितरां गौरवमावहन्, '[9]स एव धर्मो मनुना प्रकीर्तितः' इति मनुसंहिताया-

1. स १८. श्लो ३३ 2. स १०. श्लो २६. 3. स १२. श्लो ६० 4. स ४. श्लो ६०. 5. स १७. श्लो ७४ 6. स १. श्लो ९४ 7. स १५ श्लो ७४. 8. स २. श्लो २. 9. स १४. श्लो ६७.

मादरातिशयं विवृण्वन्, त्रैवर्णिकानामन्येषां चाचारादिकं तत्र तत्रावबोधयति। तथाहि—

'[1]स्थित्यै दण्डयतो दण्ड्यान्परिणेतु. प्रसूतये। अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥' इत्युक्तरीत्या अपार्थिवसुखाभिलाषिणां समलोष्टाश्मकाञ्चनानां परार्थैकफलप्रवृत्तिमतां भारतवर्षीयाणां राज्ञां पूर्वेषामात्मानुशासनप्रकारं सम्यगुपपादयन्कवि., क्वचिदभिषङ्गजडानां महीपतीनां '[2]वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः' '[3]सुखोपरोधि वृत्तं हि राज्ञामुपरुद्धवृत्तम्' इत्यादिना स्वकीयं धर्ममुपदिशति ॥

'[4]अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः' '[5]महाक्रतोर्विश्वजितः प्रयोक्ता' '[6]अधिवसंस्तनुमध्वरदीक्षिताम्' '[7]तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार' '[8]वेदिप्रतिष्ठान्वितताध्वराणां यूपानपश्यच्छतशो रघूणाम्' '[9]पत्युः प्राग्वंशवासिनः' इत्यादिना फलाभिसंधिरहितैर्मुमुक्षुभिरसंस्कृतमनोवृत्तिभि. स्वर्गनिवासकाङ्क्षिभिश्चानुष्ठेयानां यज्ञादीनामाचरणस्यावश्यकतां प्रदर्श्य श्रौतोक्तकर्मानुष्ठाननिरतैरात्मनः परिचयमवबोधयन्,

1. स १. श्लो २५. 2. स ८. श्लो ८३ 3. स १८. श्लो १८. 4. स ६. श्लो ७४. 5. स ४. श्लो ७६ 6. स ९. श्लो २१. 7. सर्ग १५. श्लो ८७. 8. सर्ग १६. श्लो ३५ 9. स १५. श्लोक ६१.

पूर्वेषां राज्ञां भवनेषु "[1]वसंश्चतुर्थोऽग्निरिवाग्न्यगारे' "[2]अग्नि-शरणमार्गमादेशय' इत्यादिना अनुसवनं त्रेताग्नीनामनुसेवनं च सूचयन्, गृह्योक्तसंस्कारादिष्वप्यात्मनः सम्यग्विनयनमाविष्करोति । तथाहि—

पितॄणाम् ऋणनिर्मोक्षसाधनस्य सुतस्य लाभार्थमाचरणीयान्व्रतादीन्काम्याश्चेष्टीः कचित्कचित् ज्ञापयन्, "[3]यथाक्रमं पुंसवनादिकाः क्रियाः' इत्यादिना गर्भसंस्कारविधिमनुवर्णयन्, "[4]स जातकर्मण्यखिले तपस्विनाम्' "[5]कविः कुशलवावेव चकार किल नामतः' "[6]स वृत्तचूलश्चलकाकपक्षकैः' "[7]अथोपनीतं विधिवद्विपश्चितः' "[8]अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद्गुरुः' इत्यादिना जातकर्मादिविवाहपर्यन्तानां संस्काराणां स्वरूपं वर्णयन्, ब्रह्मचर्यमनुतिष्ठद्भिरनुष्ठेयान्विधींस्तत्र तत्र बोधयन्, "[9]कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते' इति गार्हस्थ्यस्य प्राशस्त्यं सूचयन्, सप्तमे सर्गे पाणिग्रहणविधिं मधुपर्कप्रदानादारभ्य लाजहोमान्तं कथयन्, "[10]हस्तेन हस्तं परिगृह्य वध्वाः' इति "[11]अथास्यै दक्षिणेन

1. स ५. श्लो २५. 2. शाकुन्तलं अङ्क ५. 3. स ३. श्लो १०. 4. स ३. श्लो १८. 5 स १५. श्लो ३२. 6. सर्ग ३. श्लोक २८. 7. स ३. श्लो २९. 8. स ३. श्लो ३३. 9. स ५. श्लो १० 10. सर्ग ७ श्लो २१. 11 आपस्तम्बगृह्यसूत्रम् . खण्ड १.

नीचा हस्तेन दक्षिणमुत्तानं हस्तं गह्णीयात्' इत्यादिसूत्रकारोक्तिं स्मृतिपथमारोपयन्, '[1]मुनिवनतरुच्छायां देव्या तया सह शिश्रिये गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्' इत्यादिना गलितवयोभिराश्रयणीयस्य वानप्रस्थाश्रमस्य रीतिमसकृद्बोधयन्, '[2]अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम्' '[3]तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम्' इति त्यक्तजीवितानां शरीरस्यालङ्करणपूर्वकमग्निसात्करणं कथयन्, '[4]अथ तेन दशाहतः परे गुणशेषामुपदिश्य भामिनीम्। विदुषा विधयो महर्धयः पुर एवोपवने समापिताः ॥' इति और्ध्वदेहिकक्रियाभिर्निवापाञ्जलिभिः परलोकजुषां संतर्पणादिकं विवृण्वन्, निर्मलान्तःकरणानामेव तुरीयाश्रमप्रवेशाधिकारं योगसमाधिना तनुत्यजां विषये पिण्डदानादेरनावश्यकतां च बोधयतीत्यहो! अभिज्ञता श्रौतस्मार्तविधिषु महाकवेः।

अथ पौराणिकानां समयमनुरुन्धन्कविः '[5]जैत्रैरथर्वभिः' इत्यादिना शत्रुजयैषिणामथर्वमन्त्रैरभिचारप्रयोगानुष्ठानं सूचयन्, '[6]तस्य सन्मन्त्रपूताभिः स्नानमद्भिः प्रतीच्छतः' इत्यनेन मन्त्रजलानां माहात्म्यं विशदयन्, '[7]तीर्थे तोयव्यतिकरभवे

1. स ३. श्लो ७०. 2. स ८. श्लो ६२. 3. स ८. श्लो ५७
4. स ८. श्लो ७३. 5. स १७. श्लो १३. 6. स १७. श्लोक १६
7. स ८. श्लो ९५.

जह्नुकन्यासरय्वोः,' '[1]समुद्रपत्न्योर्जलसन्निपाते,' '[2]अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे,' '[3]त्रिपुष्करेषु त्रिदशत्वमाप,' इति पुण्यतीर्थानुसेवनस्य स्वर्गफलकत्वमुपपादयन्, '[4]तद्गतिं मतिमतां वरेप्सितां पुण्यतीर्थगमनाय रक्ष मे' इति ब्रह्मनिष्ठानामपि तीर्थाटनेन चित्तनैर्मल्यावाप्तिं ध्वनयन्, सुप्रसिद्धेषु देवतायतनेषु '[5]असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः' '[6]अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम्' इति क्षेत्रद्वयं निर्दिशन्, तरुणेन्दुशेखर एव निरतिंशयां भक्तिमादधानोऽपि, जनार्दनानुध्यानावसरेषु '[7]लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः' इति आत्मनस्तद्भक्ततामाविष्कुर्वन्, शैववैष्णवसंप्रदायानुयायिभिरनुसरणीयां सरणिं सम्यगवबोधयति ॥

'[8]समुद्ररशना साक्षात्प्रादुरासीद्वसुन्धरा' '[9]शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः' '[10]अस्त्युत्तरस्यां दिशि देवतात्मा' '[11]तस्याः पुरः संप्रति वीतनाथां जानीहि राजन्-

---

1. स १३, श्लो ५८ 2. स १५. श्लो १०१ 3. स १८. श्लो ३१. 4. स ११. श्लो ८७. 5. स ६. श्लो ३४. 6. स ८ श्लो ३३ 7. स १०. श्लो ३१. 8. स १५. श्लो ८३. 9. सर्ग २. श्लोक १२. 10. कुमारसम्भव स १. श्लो १. 11. स १६. श्लो ९.

धिदेवतां माम्' '[1]त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः' '[2]यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम्' '[3]सान्निध्ययोगात्किल तत्र शच्याः' इत्यादिना धरायामटव्यां शिलायां नगर्यां वनस्पतौ विमाने स्वयंवरे चाधिष्ठानदेवतासान्निध्यं वर्णयन्कविः, '[4]ततः सपर्यां सपशूपहारां पुरः परार्ध्यप्रतिमागृहायाः । उपोषितैर्वास्तुविधानविद्भिर्निर्वर्तयामास रघुप्रवीरः' इति क्षुद्रदेवताप्रसादनाय तान्त्रिकेण विधिना दीयमानं पशूपहारादिकमनुवर्णयन्, '[5]बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश' इति कथावशेषितानां पितॄणां प्रतिकृतेरहरहर्दीयमानं बलिपूजादिकं च निर्दिशति ॥

एवमसौ महाकविः अविदुषां परप्रत्ययनेयमतीनाम् अर्चिरादिमूर्त्युपासकानां शिष्टानां यज्वनां ज्ञानिनां मुमुक्षूणा विद्यानिष्पत्तिमतां योगिनां भिन्नभिन्नसंस्काराभिरुचिमतां तत्तदनुभवगोचरं सिद्धान्तमुपपादयन्, भारतवर्षीयाणामाध्यात्मिकं मतं निरुपममिति द्योतयन्, सर्वेषामपि मर्त्यानां तारकत्वेनोपदिश्यमानः सिद्धान्त एकरूपश्चेत्स केषांचिदनुभवागोचरः सन् मतत्वेन निर्देशानर्ह इति सूचयति ॥

---

1. स १३. श्लो ५३. 2. स १३. श्लो १९. 3. स ७ श्लोक ३. 4. स १६. श्लो ३९. 5. स १६. श्लो १५.

अथ चक्रवर्तिनां रघूणां पौर्वापर्यक्रमश्च काव्योक्तरीत्या कैः पूर्वसूरिभिर्वाग्विषयीकृतः । दाशरथेश्चरितमेव रामायणे समग्रतया वर्णितं दृश्यते । इतरेषां च भानुवंशीयानामपदानं किं प्रमाणीकृत्य कविनोपपाद्यते । रघोः रामभद्रस्य च मध्यजातत्वेनात्र निर्दिष्टाः केचन सार्वभौमास्तथात्वेन नोपवर्णिता वाल्मीकिना। तथाहि— असौ महर्षिः रघुं ककुत्स्थसुत इति, शङ्खणसुदर्शनाग्निवर्णान्त्रघोरात्मजस्य कल्माषपादस्य पुत्रपौत्रप्रपौत्रा इति, शीघ्रगमरुप्रसुश्रुकान्क्रमेणाग्निवर्णस्यानन्तरजाता इति, अम्बरीषनहुषययातिनाभागान् अजादुत्पन्नस्य दशरथस्य पूर्वपुरुषा इति, [1]असकृन्निर्दिशति । इमं च वाल्मीकिप्रोक्तं पौर्वापर्यक्रमं विहाय किमर्थमन्यथा वर्ण्यते कालिदासेनादिकाव्ये प्राचेतसोपज्ञे महद्भीरवमनुभावयता[2] परम्परा रघुकुलभुवामित्यादिकमिदानीं विमर्शनीयं भवति। अत्रेदमवधेयम्---वैवस्वतमनुवंशोत्पन्नानां सार्वभौमानां परम्परा विस्तरतः सर्वेष्वपि महापुराणेषु प्रायेणैकरूप्यतो वर्ण्यमाना रामायणोक्तक्रमान्नितरां विसंवदतीति निपुणमवधार्य [3]रामस्य वृत्तमेव विशेषतः कूजन्तं वाल्मीकिमस्मिन्नंशे अप्रमाणीकृत्य मन्वन्तराणि वंशानुचरितं चेदंपरतया बोधयितुं

1 रामायण — बालकाण्ड — सर्ग ७० , अयोध्याकाण्ड — सर्ग ११०
2. सर्ग १५ श्लो ६३, ६६ 3. सर्ग १५ श्लो ६४.

प्रवृत्तानि पुराणान्येवावलम्ब्य रघुवंशो निरधारि महाकविनेति प्रतिभाति ॥

अत्र केचन नवीनाः प्रत्यवतिष्ठन्ते —पुराणानि कालिदासीयकालापेक्षया नितरामर्वाचीनानि । ऐरोपीयसंस्कृतपण्डितैर्विमर्शकैः कैश्चित्पुराणानां कालः ख्रिस्त्वब्दीयदशमशतकानन्तरमिति कालिदासस्य तु कालः ख्रिस्त्वब्दीयषष्ठशतकानन्तरमिति च सर्वतो जोघुष्यते । पाद्मपुराणे चोत्तरखण्डे वर्ण्यमानं रघोरुत्पत्त्युपाख्यानं रघुवंशकाव्यादुद्धृत्योदाहृतमिव प्रतिभाति प्रतिभावताम् । सुबहूनि देवतायतनानि नूतनतया निर्मितानि तत्र तत्र पुराणेषु बहुशः प्रस्तूयन्ते । एवं सति कालिदासो रामायणमप्यप्रमाणीकृत्य पुराणेभ्यो रघुवंशक्रममुपलब्धवानिति कथमिदं संगच्छते— इति ॥

अत्र ब्रूमः — विक्रमभूपसभालंकारत्वेन निर्दिष्टेषु नवसु रत्नेषु कालिदासस्य समकालिकत्वेन वर्ण्यमानेनामरसिंहेन 'पुराणं पञ्चलक्षणम्' इति विशिष्येमानि निर्दिष्टानीति, छान्दोग्ये सनत्कुमारनारदसंवादे एतानि नामतो गृहीतानीति, ख्रिस्त्वब्दात्प्राचीनकालिकैः श्रीमत्पराशरबादरायणशुकादिभिरिमानि प्रणीतानीति, कालिदासग्रथितो रघुवंशः प्रधानेष्वंशेषु विष्णुपुराणं वायुपुराणं चानुसरतीति, तीर्थानां माहात्म्यं बहुधा पुरा-

णेषूपवर्णितं कविनानेन तत्र तत्रानूदितमिति, भारतवर्षे प्रसिद्धतया पुराणैः प्रस्तुतेषु देवतायतनेषु कतिचन विशेषतः कालिदासेन प्रोक्तानीति, पुराणेष्वतिपावनत्वेन निर्दिष्टं नैमिशं वनं वशिनामुत्तमेन चक्रवर्तिना सुदर्शनेन पश्चिमे वयसि शिश्रिये इति रघुवंशे प्रतिपादितमिति च हेतवः कालिदासापेक्षया पुराणानामतिप्राचीनतामवगमयन्ति। यद्यपि पुराणेषु नवीनाः स्थलमाहात्म्यकथा बादरायणादिभिरविदिता अर्वाचीनैः संदर्भाविरोधेन गुम्भिताः, अथापि सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितान्याधिकृत्य प्रतिपादिता विषयाः सर्वेष्वपि पुराणेषु प्रायश एकरूपेणोपलभ्यन्त इति, अस्मिन्नंशे प्रामाण्यमनुभावितं महाकविना इत्यलमातिविस्तरेण॥

अथ प्रसङ्गात् विष्णुपुराणप्रोक्तो वैवस्वतमनुवंशक्रमः कीदृशः? केष्वंशेष्वयं कविस्तदिदं पुराणमनुसरति? पुराणानामन्येषामस्य च कथमैकरूप्यमवगम्यते? इति विमर्शवर्तनीमधिरोहति सकुतूहलं चेतः। तत्रादौ विष्णुपुराणे वंशक्रम एवं पठ्यते— पुरा वैवस्वतमनोरात्मज इक्ष्वाकुः प्रथममिमां पृथ्वीं शशास। तस्मात्संजातो विकुक्षिः श्राद्धार्हशशभक्षणेन पितुरनभिमतः शशादसंज्ञां लेभे। तस्य तनूजः परंजयो महोक्षरूपं महेन्द्रमास्थाय ककुत्स्थो भूत्वा वैष्णवेन तेजसाप्यायितो देवासुरसंग्रामे

समस्तानसुरान्निजघान । तस्माच्च प्रसृते वंशे पृथुश्रावस्तधुंधुमारयुवनाश्वमान्धातृपुरुकुत्सानरण्यत्रिशङ्कुहरिश्चन्द्रसगरकल्माषपाददिलीपखट्वाङ्गादयः प्रथितयशसोऽभवन् । खट्वाङ्गाद्दीर्घबाहुः, तस्माच्च रघुरजायत । रघोस्तनूजादजादुत्पन्नस्य दशरथस्य श्रीभगवानब्जनाभश्चतुर्धा पुत्रत्वमयासीत् । श्रीरामभद्रात्प्ररोहन्कुशातिथिनिषधनलनाभागनभपुण्डरीकक्षेमधन्वादिभिरलंकृतो वंशः प्रववृधे । तदनन्तरजातेष्वेकतमो हिरण्यनाभो जैमिनेः शिष्यो भूत्वा योगविद्यामधिगम्य ब्रह्मभूयं जगाम । अस्माच्च योगिनो याज्ञवल्क्यो योगमवाप । हिरण्यनाभात्पुत्रः, तस्मात्पुष्यः, ततो ध्रुवसन्धिः, अनन्तरं सुदर्शनश्च बभूव । सुदर्शनस्यात्मजन्मनोऽग्निवर्णात्क्रमेण शीघ्रगमरुप्रसुश्रुतसुगविप्रभृतयो जज्ञिरे । तेषु चरमो बृहद्बलोऽर्जुनस्य तनयेनाभिमन्युना भारतयुद्धे क्षयमनीयत—इति । अयं च क्रमः प्रायेणैकरूपतया वायुपुराणेऽष्टाशीतितमेऽध्याये दृश्यते । परमियानेव भेदः, वायुपुराणे पौत्रस्य जैमिनिशिष्यत्वमुपवर्णितम्, वंशविस्तरश्च विष्णुपुराणापेक्षया संक्षेपतः कथित इति ॥

महाकविश्च रघुवंशे रघोर्जनयितारं दीर्घबाहुं दिलीपाख्यया निर्दिशति । इदं च नाम दीर्घबाहोः पितामहस्याभिख्यात्वेन विष्णुवायुपुराणयोरुपवर्णितं दृश्यते । जातस्य कुमारस्य पिता-

महनाम्नापि व्यपदेशः सांप्रतमेव । दीर्घबाहुरिति योगरूढं नामापि तस्यैव भवितुमर्हति । इम च भेदमन्तरा काव्येऽस्मिन्कथितो वंशक्रमः पुराणप्रोक्तात्प्रायेण न विसंवदति । पौत्रस्य जैमिनिशिष्यत्वं वदता कविना वायुपुराणोक्तक्रमोऽनुसृत इति च सुस्पष्टमेव सुधियाम् । कालिदासेन प्रसिद्धतया वर्णितो निषधनगेन्द्रो वरपर्वतेषु पश्चिमाचलत्वेन वायुपुराणे भुवनविन्यासप्रकरणे बहुधोपवर्णितः; विष्णुपुराणे च नामतो निर्दिष्टो दृश्यते । महाकविना पुनः पुनरनुवर्णित. सवितृहुताशनयोस्तेजोविनिमयो वायुपुराणे ज्योतिःसन्निवेशप्रकरणे पठ्यमानम् 'प्रभा हि सौरी पादेन ह्यस्तं याति दिवाकरे । अग्निमाविशते रात्रौ तस्माद्दूरात्प्रकाशते ॥' 'उद्यन्तं च पुनः सूर्यमौष्ण्यमाग्नेयमाविशत् । पादेन पार्थिवस्याग्नेस्तस्मादग्निस्तपत्यसौ ॥' इति श्लोकद्वयं स्मारयति । '[1]महेन्द्रमास्थाय महोक्षरूपम्' इति कविना प्रोक्ता ककुत्स्थकथा विष्णुपुराणोपवर्णितामनुसरति । '[2]सङ्ग्रामनिर्विष्टसहस्रबाहुः' इत्यादिना वर्णितो माहिष्मतीपतिर्योगी कार्तवीर्यः, तथात्वेनैव पुराणेभ्योऽप्यवगम्यते । '[3]लङ्केश्वरेणोषितमाप्रसादात्' इतीदं च 'ततो गत्वा पुलस्त्यस्तु अर्जुनं च प्रसादयत्' इति वायुपुराणप्रोक्तमनु-

1. स ६. श्लो ७२. 2. स ६ श्लो ३८. 3. स ६ श्लो ४०.

करोति । तद्वंशीयानामग्निसाहाय्यं च कालिदासेन प्रोक्तं[1] [2]तस्मिन्नेवोपाख्याने विस्तरेणोपपादित दृश्यते ॥

नन्वयं महाकविः पुराणेभ्य एव रघुवंशक्रमादिकमुद्धृत्य वर्णितवानिति चेत्, कथमेतेषु प्रधानतमत्वेन परिगणिते पाद्मपुराणे प्रोक्तं रघोरुपाख्यानं कालिदासकाव्यादुद्धृत्य लिखितमिति वक्तुं शक्यते? अत्र ब्रूमः—पुराणेऽस्मिन्सृष्टिखण्डे नवमाध्याये आदित्यवंशकथनावसरे 'रघोरभूद्दिलीपस्तु दिलीपाच्चाप्यजस्तथा। दीर्घबाहुरजाज्जात. प्रजापालस्ततोऽभवत् । ततो दशरथो जातस्तस्य पुत्रचतुष्टयम् ॥' इति वंशक्रमः प्रास्तावि । पुनस्तत्रैवोत्तरखण्डेऽष्टानवत्यधिकशततमेऽध्याये, दिलीपाद्रघो संभव., सर्वेष्वप्यंशेषु कालिदासप्रोक्तां शैलीमनुसृत्याख्यातः । एवमेकस्मिन्नेव पुराणे कुत्रचिद्रघोर्दिलीपः संजातः, अन्यत्र दिलीपाद्रघुः संजज्ञे इति परस्परविरुद्धा कथा पठ्यते ॥

अत्र प्राचीनपण्डिताः प्रत्नेषु पुराणेतिहासादिषु अप्रामाण्यदोषोद्घाटनमसहमानाः, कल्पभेदेन कथाभेदमभ्युपगम्य विरोधं परिहर्तुमुद्युञ्जते । तथा हि—'धाता यथापूर्वमकल्पयत्' इति श्रुतिवाक्यबलेन प्रतिकल्पं सृष्टिस्थितिलयादिकं प्रायेणैकरूपेण जायते । सृष्टस्य चिदचिदात्मकस्य जगत., तत्र तत्र कुत्रचिदवा-

1. स ६. श्लो ४२. 2 अध्याय. ९८

न्तरेष्वंशेषु भेद उपलभ्यते। सतां परित्राणाय युगे युगे संभवत आदिपूरुषस्यावतारकथास्वप्यनेकथा भेदो दृश्यते। श्रीरामभद्रस्य पुरतः, अनेककल्पजीविना जाम्बवता तस्यैव पूर्वावतारकथा वर्ण्यते। सा हि वाल्मीकिप्रोक्तक्रमान्नितरां विसंवदति। इदं पाद्मपुराणं[1] पठद्भिः सुस्पष्टमवगम्येत । तस्मात्कल्पभेदेन कथाभेदोऽङ्गीकरणीयः— इति ॥

चिरप्रवृत्तमिदं हि समर्थनं पुराणेष्वेव तत्र तत्रोपवर्णितं श्रुतिवाक्यमेव प्रमाणत्वेनावलम्बते इत्यतो हेतोरादरणीयमेव सुधीभिः । अथापि इमं सिद्धान्तमूरीकुर्वद्भिः पण्डितैः संदर्भाविरोधेन पुराणेषु गुम्भितानां स्थलमाहात्म्यकथानामपि प्रामाण्यमपवदितुं न शक्यते । इतरपुराणापेक्षया स्वस्यैव प्रामाण्याविष्करणे प्रवृत्तानीमानि न सर्वेष्वप्यंशेष्वादरणीयानि । केषुचित्पुराणेपूत्तरखण्डानि क्वचित्क्वचिन्नवीनत्वेन परिगण्यन्ते । कल्पभेदवाद एकस्मिन्नेव पुराणे पूर्वोत्तरवाक्ययोर्विरोधपरिहरणाय न कल्पते। अर्थवादरूपेण प्रवृत्ताः कथाः प्रायेण स्वांशे प्रमाणपदवीं नाधिरोहन्ति। पाद्मे चोत्तरखण्डे प्रस्तुता दिलीपाद्रघोरुत्पत्तिकथा, गोपूजामाहात्म्याविष्करणप्रकरणेऽर्थवादरूपेणोदाहृता, पातालखण्डे आदित्यवंशपरम्परानुवर्णनप्रकरणे प्रोक्तायाः कथाया विरुद्धा

1. पाद्मपुराणे पातालखण्डे द्वादशाधिकशततमोऽध्यायः

सती, पुराणस्यास्य प्राचीनेषु भागेष्वनन्तर्भूता, कालिदासकाव्यादनन्तरकालिकैः कैश्चिदास्तिकैर्नूतनतयोत्तरखण्डे प्रक्षिप्तेति केचन नवीना विमर्शका मन्यन्ते । ते ह्यत्रादिब्राह्मप्रोक्तां[1] कांचन कथां दृष्टान्ततयोदाहरन्ति । तद्यथा—

पुरा दशरथो नाम राजा कैकयीवचनाद्रामं ससीतालक्ष्मणं वनवासाय नियुज्य, महता दुःखेनाविष्टो ब्रह्मशापं संस्मरन्, पुत्रशोकेनासूंस्तत्याज । कर्मविपाकेन च यमानुचरैर्घोरेषु तामिस्रादिनरकेषु क्षिप्तः 'पच्यते च्छिद्यते राजा पिष्यते चूर्ण्यते तथा। शोष्यते दश्यते भूयो दह्यते च निमज्ज्यते ॥' इत्युक्तरीत्या यातनासहस्रमनुभवन्निराशो नान्तं जगाम दुःखस्य । अथ कदाचिद्यमकिंकराः सरभसमागत्य नरके पच्यमानमयोध्याधिपतिं नृपमुत्तार्याब्रुवन्—'तव पुत्रो गुणवान्रामभद्रो दण्डकायां विचरन्नद्य यदृच्छया सुरासुरमुनिजनवन्द्याया महिताया गौतमीनद्यास्तीरमासेवते । यावदयं गौतम्या योजनपञ्चकान्तरान्नापक्रामति, तावत्तव नरकानुभवो न भवेत् । यदि च कदाचिदसौ त्वां स्मरन्नद्यां स्नात्वा पिण्डादि दद्यात्, तदा सर्वपापेभ्यो विनिर्मुक्तस्त्रिविष्टपं गन्तासि' इति ॥

हृष्टो दशरथस्तेषामाज्ञामवाप्य पिण्डदानाय सुतौ प्रेरयितुं

1. आदिब्राह्मे त्रयोविंशाधिकशततमोऽध्यायः ।

स्वयमेव गौतमीतटभुवमाससाद । परिसरे च नद्याः भोज्यभक्ष्यालाभेन नितरां विषण्णौ रामलक्ष्मणौ दूराद्दृष्ट्वा, अविज्ञातोऽवज्ञातश्च सौमित्रिणा स्वं यातनादेहं निरीक्ष्य लज्जावनतशिराः शनैः शनैरवादीत्, 'अहं दशरथो राजा पुत्रौ मे शृणुतं वचः । तिसृभिर्ब्रह्महत्याभिर्वृतोऽहं दुःखमागतः । छिन्नं पश्यत मे देहं नरकेषु च पातितम् ।' इति ॥

ततश्च श्वशुरस्य यातनादुःखमसहमाना जानकी ताम्यन्ताविति कर्तव्यतामूढौ रामलक्ष्मणावालोक्य ब्रह्महत्यात्रयस्य भर्तृदेवरयोरात्मनि च विभागमुपादिशत् । तस्याश्च भाषितमनुमोदमानो दशरथः, 'न कोऽपि भवतां किंतु श्रमः स्वल्पोऽपि विद्यते । गौतम्यां स्नानदानेन पिण्डनिर्वपणेन च । तिसृभिर्ब्रह्महत्याभिर्मुक्तो यामि त्रिविष्टपम् । त्वया जनकसंभूते स्वकुलोचितमीरितम् ।' इति बभाषे । पितृभाषिताकर्णनानुक्षणमेव रामभद्रो गौतम्यां स्नातः पिण्डदानोचितं व्रीह्यन्नमपश्यन्किञ्चिदिव दुःखितः, 'यदन्नः पुरुषो राजंस्तदन्नास्तस्य देवताः' इति प्रमाणमनुस्मरन्, पिण्याकेन मन्त्रवत्पिण्डमदात् । अनुक्षणमेव यातनाशरीरमुत्सृज्य सर्वपापेभ्यो विनिर्मुक्त आदित्यसदृशाकारो विमानवरमारूढः स्तूयमानश्च किंकरैः पश्यतोरेव सुतयोर्दिव्यान् लोकान् जगाम— इति ॥

अयं चेतिहासो रामायणे न दृश्यते। अज्ञानान्मुनिकुमारं हत्वा ब्राह्मणेतरेण तज्जनकेन शप्तस्य पुत्रशोकादसूंस्त्यक्त्वा आत्मनः पुण्यैरार्जितं नाकलोकमधिवसतः सुरेन्द्रमहितस्य दशरथस्य घोरयातनानुभवकथनं गौतमीमाहात्म्यद्योतनायोदाहृतं सत् स्वांशे सर्वथा न प्रामाण्यमावहति ॥

एवं पुराणानि सर्वेष्वप्यंशेषु न प्रमाणीभवितुमर्हन्तीति वदतामाधुनिकविमर्शकानाम्, हेतुविचारं दूरीकृत्य पुराणेतिहासादीनान्तरेणादरेण श्रद्दधानानां प्राचीनपण्डितानां च पुराणवाक्यान्यधिकृत्य पौर्वापर्यनिर्णये प्रामाण्याप्रामाण्यनिर्धारणे च न कदापि सामरस्यं संपादयितुं शक्यते इति विरमामः।

'कविप्रथमपद्धतिम्' इत्यात्मनैव सबहुमानमुपवर्णितां प्राचेतसमुखेनादौ ब्रह्मलोकाद्भुवमवतीर्य प्रवृत्तां विशदविशदां मधुरां दिव्यां भारतीमसकृदनुसन्दधानः, प्रसादसुमुख्यास्तस्या विलासमुपलभ्य, कथावर्णनप्रकारे आशयाविष्करणरीतौ शब्दप्रयोगसरणौ भुवनविन्यासविवरणे तत्तद्रसोपपादनपद्धतौ चायं कविरजानान एव प्राचेतसं सर्वात्मनानुकरोतीत्यहो! विलसितं सरस्वत्याः। तथाहि—

प्रथमं कविनानेन कृतं 'रघुवंश' इत्यभिधानं महर्षिमुखान्निःसृतायां वाग्धोरण्यां बालकाण्डे[1] युद्धकाण्डे[2] च श्रूयते ॥

---

1. स ३. श्लो ९. 2. स १ श्लो ११

आदौ 'आजन्मशुद्धानाम्' इति प्रक्रम्य, दुर्लभान्गुणाननु-श्रोतॄणां कौतूहलमुत्पाद्य, तादृशगुणसम्पन्ना रघव इत्यनन्तरमुपसंहृत्य, 'तं सन्तः श्रोतुमर्हन्ति' इति भावुकानामवधानं सम्पाद्य, वैवस्वतमनोरन्वये प्रभूतं दिलीपम् 'व्यूढोरस्को वृषस्कन्धः सालप्रांशुर्महाभुजः' इत्यादिना वर्णयन्कविः, 'कोऽन्वस्मिन्साम्प्रतं लोके गुणवान्' इत्युपक्रम्य लोकोत्तरान्गुणानुपपाद्य तादृशगुणानामाश्रयः क इति कौतूहलेन पृच्छन्तं प्राचेतसमनुबोध्य इक्ष्वाकुवंशप्रभवं रामम् 'विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः । महोरस्को महेष्वासः' इत्यादि वर्णयन्तं नारदमनुस्मारयति ॥

द्वितीये सर्गे—'[1]वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः' इति वाल्मीकिवदनात्सुन्दरं निःसरन्ती सरस्वती 'स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्' इति महाकविरसनायां नृत्यति । '[2]हर्म्यवातायनस्थाभिर्भूषिताभिः समन्ततः । कीर्यमाणः सुपुष्पौघैर्ययौ स्त्रीभिररिन्दमः' इत्येवं प्राचेतसात् समुत्पन्ना वाणी महाकवितः संस्कारमवाप्येव 'अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः' इत्यात्मानमावृणोति ।

---

1. सुन्दरकाण्ड. स ५६. श्लो १४. 2. अयोध्याकाण्ड. स १७. श्लो ३७, ४२.

'[1]मम भक्षः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ' इति हनूमत्परीक्षणाय प्रचोदितया सुरसया प्रोक्तं वचः 'तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण' इति दिलीपं प्रतिवदतः कुम्भोदरस्य भाषितेन सजातीयमिव प्रतिभाति ॥

तृतीये—'[2]प्रदक्षिणावर्तशिखस्तप्तहाटकसन्निभः । हविस्तत्प्रतिजग्राह पावकः स्वयमुत्थितः ॥' इति शुभशंसिलक्षणमेकं विशदयन्ती आद्या वाग्धोरणी, महाकवेश्चित्ते चिरं लीना तेनापि तथात्वेनाविज्ञाता 'प्रदक्षिणार्चिर्हविरग्निराददे' 'प्रदक्षिणार्चिर्व्याजेन हस्तेनैव जयं ददौ' इति द्वेधा आत्मनो विलासं प्रदर्शयति । एवं शुभान्यशुभानि च निमित्तानि महाकविना तत्र तत्र वर्णितानि रामायणोक्तां[3] रीतिमेवावलम्बन्त इति व्यक्तमेव विमर्शकानाम् ॥

चतुर्थे—'[4]शचीपतेः केतुरिव' इत्यसकृन्महर्षिणा निर्दिष्टो वृष्ट्यर्थं जनैरभिपूजितो ध्वजः 'पुरुहूतध्वजस्येव' इति कविनाप्युपवर्ण्यते । '[5]चमूं प्रकर्षन्महतीम्' इति मधुरं प्रसृता वाणी

1. सुन्दरकाण्ड. स १. श्लो १५१. 2. युद्धकाण्ड. स ८०. श्लो १० 3 सुन्दरकाण्ड स ४ श्लो ४६, ४७; रघुवंश स ३ श्लो १४; युद्धकाण्ड. स ५७ श्लो ३६, ४०; रघुवंश. स ११. श्लो ५८-६१. 4 अयोध्या स ७४ श्लो ३६; युद्ध. स ८६. श्लो १७. 5. सुन्दर स ३७ श्लो १८.

'स सेनां महतीं कर्षन्' इति महाकविजिह्वया पुनः प्रसरति ।

'[1]आपानभूमिगमनम्' '[2]आपानभूमिमुत्सृज्य' '[3]आपानशाला विचिता' इत्यसकृदादिकाव्ये श्रूयमाणा वर्णावलिः 'रचितापानभूमयः' इति महाकाव्येऽप्यनुश्रूयते ॥

'[4]इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया । स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः ॥' इत्येवं रमणीयं प्रवहन्ती वचःसुधा कविनानेन पुनःपुनरास्वादिता 'इन्द्रियाख्यानिव रिपून्' इत्यत्रान्तर्लीनेवानुभूयते ॥

'प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम्' इति काव्येऽस्मिन्विलसन्ती वाणी '[5]प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा' इति महर्षिणा प्रदर्शितां पद्धतिमनुसरति ॥

**पञ्चमे**—'रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् । न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात्' इतीदं च पद्यम्, '[6]रूपलक्षणसम्पन्नौ मधुरस्वरभाषिणौ । बिम्बादिवोत्थितौ बिम्बौ रामदेहात्तथापरौ ॥' इत्यस्माद्बिम्बादिवोत्थितं सहृदयान्त्रसयति ॥

1. बाल. स ३. श्लो २९. 2. सुन्दर. स २. श्लो ४७ 3. सुन्दरकाण्ड. स १२. श्लो १२. 4. युद्ध स ११४. श्लो १८. 5. सुन्दरकाण्ड. स ५८ श्लो ८९. 6. बाल. स ४. श्लो ११.

'[1]स्त्रीभिः सपुत्रैर्वृद्धैश्च रममाणैरलङ्कृतान् । सुराधिपस्योपवने यथा चैत्ररथे द्रुमान् ॥' इति वाल्मीकिसुभाषितास्वादाधिगतसंस्कारः कविः 'एको ययौ चैत्ररथप्रदेशान्सौराज्यरम्यानपरो विदर्भान्' इत्यवशमुद्गृणातीव ॥

षष्ठे— '[2]परार्ध्यास्तरणोपेताम्' इत्यादौ निर्गलिता वाक् 'परार्ध्यवर्णास्तरणोपपन्नम्' इति महाकविमुखेन प्रवहति ॥

. 'गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति' इति वर्णयन्कविः '[3]सोऽहं कथमिमं भारं महाधुर्यसमुद्धृतम् । दम्यो धुरमिवासाद्य वहेयं केन चौजसा ॥' इत्येवमादिकाव्यप्रोक्तमाशयमन्तरात्मना स्मरतीव ॥

सप्तमे— '[4]राजप्रवेशसुमुखैः पौरैर्मङ्गलवादिभिः । संपूर्णां प्राविशद्राजा जनौघैः समलङ्कृताम् ॥' '[5]हर्म्यवातायनस्थाभिर्भूषिताभिः समन्ततः । रामं सर्वानवद्याङ्ग्यो रामपिप्रीषया ततः । वचोभिरग्र्यैर्हर्म्यस्थाः क्षितिस्थाश्च ववन्दिरे । ......तया सुचरितं देव्या पुरा नूनं महत्तपः । रोहिणीव शशाङ्केन रामसंयोगमाप सा । इति प्रासादशृङ्गेषु प्रमदाभिर्नरोत्तमः । शुश्राव राजमार्गस्थः

---

1. युद्ध स १२८. श्लो २४. 2. सुन्दर. स ९ श्लो २७. 3 अयोध्या. स ७३. श्लो १६. 4. बालकाण्ड स ७७, श्लो ९. 5. अयोध्याकाण्ड. स १६ श्लो ३७-४२

प्रिया वाच उदाहृताः ॥' इत्यादि महर्षिभाषितमसकृदनुमोदमानः, आर्यावर्ते उज्जयिन्यादिमहानगरेषु यदृच्छया विचरन् राजमार्गेषु वधूवराणां विवाहयात्रोत्सवेषु आलोकमार्गं सहसा व्रजन्तीनां प्रासादवातायनसंश्रितानां पौराङ्गनानां लोलापाङ्गै रममाणो महाकविः, वधूवरयोः पुरप्रवेशवर्णनावसरे प्राचेतसेनाविष्कृतां रीतिमाश्रित्य 'ततस्तदालोकनतत्पराणाम्' इत्युपक्रम्य 'इत्युद्गताः पौरवधूमुखेभ्यः शृण्वन्कथाः श्रोत्रसुखाः कुमारः' इत्येतदन्तेन स्वानुभवं निपुणमभिव्यञ्जयति ॥

यत्तूक्तम्—अश्वघोषरचिताद्बुद्धचरितादियं वर्णनरीतिः कविनानेनोपलब्धा—इति ; तदविज्ञातभारतवर्षीयनागरिकवृत्तान्तानां मानसिकं विजृम्भितमिति व्यक्तमेव । महाकवेरस्य अश्वघोषस्य वा जीवनकालः क इति नाद्यावधि साधु निर्धारितः । द्वावप्यादिकाव्यादुद्धृत्य लिखितवन्तावित्यपि संभाव्यते, उत अश्वघोषो रघुवंशात् । हेतुशास्त्रमाश्रित्यानुमातारः केचन विमर्शका इदानीं पठ्यमाने रामायणे कतिचन सर्गान् सुबहूनि पद्यानि च प्रक्षिप्तत्वेन मन्यन्ते ॥

अथ कीदृशी पाश्चात्त्यपण्डितानां कविसमयनिर्धारणघोरणीति विचारयामः । केचन, 'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः

सभायां रत्नानि वै वररुचिर्नव विक्रमस्य' इति ज्योतिर्विदाभरणप्रोक्तं पद्यमेकं प्रमाणत्वेनावलम्ब्य, अमरसिंहवराहमिहिराचार्ययोर्जीवनकालं खिस्त्वब्दीयषष्ठशतकत्वेन हेत्वन्तरैर्निर्णीय, तयोः समकालिकोऽसौ महाकविस्तदानीमेवासीदिति वदन्ति ॥

अन्ये तु, खिस्त्वब्दीयपञ्चमशतके समुत्पन्नेनार्यभटेनोपवर्णितं चन्द्रग्रहणस्वरूपम् 'छाया हि भूमेः शशिनो मलत्वेनारोपितः शुद्धिमतः प्रजाभिः ।' इत्यनुवदन्नसौ महाकविरार्यभटादर्वाचीन इति कथयन्ति ॥

अपरे पुनः, कल्हणप्रणीतायां राजतरङ्गिण्यां नामतो गृहीतेषु कविषु कालिदासस्याभिख्या नोपलभ्यते । परं हिरण्यभूपानन्तरमराजकान्कश्मीरान्विज्ञाय उज्जयिनीपालकः खिस्त्वब्दीयषष्ठशतकोत्पन्नो हर्षः, मातृगुप्तनामानमात्मीयं कविं कश्मीरान्पालयितुं प्रजिघायेति पठ्यते । सोऽयं मातृगुप्तो नामसाम्यादन्यैश्च हेतुभिः कालिदास एवेति मन्यन्ते ॥

इतरे, 'स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान्' इत्यन्यापदेशरीत्योपालब्धः कवेरस्यानभिमतः समकालिको दिङ्नागाचार्यः खिस्त्वब्दीयाष्टासप्तत्युत्तरपञ्चशततमे हायने समभूदिति कालिदासोऽपि तात्कालिक इति निरूपयन्ति ॥

कतिचन, ग्रीस्देशादागतानां यवनानां सिन्धुनामकाद्देशात्प्रतीच्यां दिशि कृतनिलयानां पराक्रमादिकं कालिदासेन रघुवंशे सूचितम् । ते हि खिस्त्वब्दात्प्राचीनेषु शतकेष्वासन् । अतो महाकविरसौ खिस्त्वब्दीयप्रथमशतकान्नार्वाचीन इति निर्णयन्ति ॥

अन्ये, शकसंवत्सरकर्ता विक्रमभूपः खिस्त्वब्दात्पूर्वे शतके आसीत् । कालिदासोऽपि तदानीमेव तस्य सभामलंचकारेति मन्वते ॥

इतरे, भारतवर्षस्य प्राग्भागेभ्यः खिस्त्वब्दीयप्रथमशतके जावाद्वीपं गतैरार्यैः सहैव नीतो रघुवंशः पालिभाषायां विपरिणमितो दृश्यते इत्यतो हेतोर्महाकवेः कालः खिस्त्वब्दात्पूर्वं शतकमेवेति च वदन्ति ॥

एवं महता परिश्रमेण प्राचीनग्रन्थान्परिशोध्य, शिलाशासनान्यनुवाच्य, बौद्धकाव्यान्यालोड्य, देशान्तरादिदं वर्षमागतैरपूर्वदेशदर्शनकुतूहलिभिर्विबुधैरनुवर्णितं तदानीन्तनराष्ट्रव्यवस्थादिकमवगत्य, कालिदासप्रभृतीनां महापुरुषाणां जीवनकालादिकं निर्णीय, भारतवर्षस्य पुरावृत्तं सम्यगवबोधयन्ति । हेतुशास्त्रमालम्ब्य प्राचीनमितिवृत्तं निर्णेतुं प्रवृत्तानामेतेषां पाश्चात्त्यविदुषां परम्परमभिप्रायभेदेऽपि परिशोधनप्रकारस्त्वे-

करूप एव। अनया युक्तिविचाररीत्या बहवो ग्रन्था आनुषङ्गिकतया परिशीलिता भवन्ति; स्वातन्त्र्येण विषयपर्यालोचनपाटवं चोपजायते। इदं खलु वैदुष्यस्य फलम्, यदविज्ञातानां विषयाणां ग्रन्थावलम्बिनीभिरेव युक्तिभिः केनचित्सम्प्रतिपन्नेन प्रकारेण संशोधनं नाम। पाश्चात्त्यानामेषा कविकालनिर्णयधोरणी मेघसंदेशविमर्शे विस्तरेणोपपादयिष्यत इति विरम्य प्रकृतमनुसरामः॥

"[1]व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे। न क्रतौ न विवाहे च दर्शनं दुष्यति स्त्रियाः।' इति वाल्मीकिसुभाषितमनुस्मरन्निव कविः, 'इतः परानर्भकहार्यशस्त्रान्वैदर्भि पश्यानुमता मयासि' इति अजमुखेनेन्दुमतीं चोदयति॥

**अष्टमे**— '[2]अस्या हि पुष्पावनताग्रशाखाः शोकं दृढं वै जनयन्त्यशोकाः' इत्यस्मादधिगतसंस्कार इव कविः, 'अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे' इत्यशोकस्यापि शोकं भावयति॥

**नवमे**— '[3]प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम्। वाप्युत्तमानामधिकाद्य लक्ष्मीर्वराङ्गनानामिव भूषिता-

---

1 युद्धकाण्ड स ११७. श्लो २७ 2. सुन्दर. स १६. श्लो ३१
3. किष्किन्धा. स ३० श्लो ५०

नाम् ॥' इति श्रोत्रपेयं मध्वासाद्य कविः, 'शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः । विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहङ्गमाः' इति मदकलमुद्गिरति ॥

**दशमे**—'[1]त्वं त्रयाणां हि लोकानामादिकर्ता स्वयं प्रभुः । अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव । दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च । दिक्षु सर्वासु गगने पर्वतेषु वनेषु च । जगत्सर्वं शरीरं ते' इत्यार्षं स्तवमनुसंदधानः कविः, 'नमो विश्वसृजे पूर्वम्' इत्युपक्रम्य श्लक्ष्णया गिराधोक्षजं प्रसादयति ॥

**एकादशे**—'[2]महेन्द्रवरुणोपमौ' इत्यसकृदादिकविना प्रोक्तामुपमामसौ महाकविः, 'भूपती वरुणवासवोपमौ' इति निपुणं योजयति ॥

**द्वादशे**—'प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम्' इत्युपवर्णितः कवेराशयः, बुद्धमहिमवर्णनपराल्ललितविस्तारग्रन्थादुद्धृत इति यदुक्तम्; तदसारम् । यतः सिंहिकानाम्नी काचन राक्षसी प्रभावेण छायाग्राहिण्यासीत् इति, रावणभयाच्च '[3]निष्कम्पपत्रास्तरवो नद्यश्च स्तिमितोदकाः' इति चादिकाव्येऽपि पठ्यते ॥

---

1. युद्ध. स १२०. श्लो २०, १५. २२. 2. अयोध्या. स १ श्लो ४; सुन्दर स ४०. श्लो ६. 3. आरण्य. स ४८ श्लो ९.

**त्रयोदशे**- [1]'धूमगन्धं वपायास्तु जिघ्रति स्म नराधिपः। यथाकालं यथान्यायं निर्णुदन्पापमात्मनः' इत्येवमादौ प्रवृत्तां सरस्वतीम् 'घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा' इत्यनेन व्याख्यातीव कविः ॥

'[2]स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलः श्वेत इवोच्चशृङ्गः' इत्येवं गभीरं प्रवहन्ती गैर्वाणी, महाकविहृदयात् 'बध्नाति यो बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः' इति सरसं निःसरन्ती हृदयं बध्नाति ॥

**चतुर्दशे**— बर्हिणनादितेषु मृदुशाद्वलेषु हिमवतः परिसरारण्येषु परिभ्रमन्नसौ महाकविः. '[3]क्रोशन्तीं कुररीमिव' इत्यसकृन्महर्षिणा निर्दिष्टस्योपमानस्यौचित्यमात्मानुभवेनावगच्छन्, 'चक्रन्द विग्ना कुररीव भूयः' इति शोकसागरमग्नाया जानक्याः कृपणां दशां वर्णयति ॥

**पञ्चदशे**— '[4]राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥' इति प्राचेतसात्समुत्पन्नां वाचमनुरुध्य कविः, 'कृतदण्डः स्वयं राज्ञा

1 बाल. स १४. श्लो ३५ 2. सुन्दर. स ५. श्लो ५. 3. किष्किन्धा स १९. श्लो २८; युद्ध. स ३२ श्लो ३. 4. किष्किन्धा. स १८ श्लो ३३.

लेभे शूद्रः सतां गतिम् । तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥' इति व्याहरति ॥

'[1]सम्प्रदास्यामि रामाय यथा सिद्धिं तपस्विने' '[2]सोपसर्गां यथा सिद्धिम्' इति वाल्मीकिनोपवर्णितां जानकीमनुसरन्निव कविः, 'स्वासिद्धिं नियमैरिव' इति तां तथैव निर्दिशति ॥

**षोडशे**— '[3]वेलामिवासाद्य यथा समुद्रः' '[4]वानरेन्द्रा महात्मानो वेलामिव महोदधिः' इतीदमुपमानमभिनन्दन्निव कविः, 'वेलां समुद्रा इव न व्यतीयुः' इति भणति ॥

[5]'वस्वौकसाराम्' '[6]प्रमदामिव भूषिताम्' इत्यसकृदनुश्रुतामादिकाव्यपद्धतिमनुस्मरन्निव कविः, 'वस्वौकसारामभिभूय साऽहम्' 'पूराबभासे विपणिस्थपण्या सर्वाङ्गनद्धाभरणेव नारी' इत्ययोध्यामुपवर्णयति ॥

'[7]ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम्। कर्तव्यं वास्तुशमनं सौमित्रे चिरंजीविभिः ॥' इति राघवेण प्रवर्तितां वास्तुसपर्याम् 'ततः सपर्यां सपशूपहारां.... उपोषितैर्वास्तुविधानविद्भिः' इत्यनेन स्मरणपथमुपनयतीव कविः ॥

---

1. सुन्दर. १३. श्लो ५१. 2. सुन्दर. स १५. श्लो ३३. 3. युद्ध. स ११२. श्लो २२. 4. युद्ध. स ७६. श्लो ६३. 5. अयोध्या. स ९४. श्लो २६; सुन्दर. स ३. श्लो १२. 6, अयोध्या स ५०. श्लो २३. सुन्दर. स ३. श्लो १८. 7. अयोध्या. स ५६. श्लो १८.

सप्तदशे—'न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ। नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु ॥' इत्यादिना अतिथेः सौराज्यकरणमुपपादयन्कविः, '[1]कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः। उभौ वा प्रतिलोमेन कामेन च न बाधसे ॥' इत्यादिना भरतकुशलानुयोगव्यापृतस्य रामभद्रस्य मुखेन सौराज्यकरणरीतिमुपदिशन्तमादिकविमनुकरोति ॥

अष्टादशे—'[2]हनूमान्प्रज्वलन् लक्ष्म्या पारियात्रोपमोऽभवत्' इति प्राचेतसमुखाद्भूरपर्वतेष्वेकतमस्य पारियात्रस्य महिमानमवगच्छन्निव कविः, 'उच्चैःशिरस्त्वाज्जितपारियात्रं लक्ष्मीः सिषेवे किल पारियात्रम्' इति वर्णयति ॥

भारतवर्षमधिकृत्य महाकविना प्रदर्शितं भुवनविन्यासविज्ञानमादिकाव्यात्पुराणेभ्यश्चाधिगतमित्यत्र नास्त्येव संशयः। अयं च विषयो मेघदूतविमर्शे विस्तरेण वर्णयिष्यते।

एकोनविंशे—'[3]चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि च। क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा' इति आदिकाव्ये प्रदर्शितां सरणिं महाकविः, 'राज्ञि तत्कुलमभूत्क्षयातुरे वमनार्चिरिव दीपभाजनम्' इति प्रकारान्तरेण विशदयति ॥

---

1. अयोध्या स १००. श्लो ६३. 2. सुन्दर. स ४३. श्लो ५.
3 अयोध्या स ६४. श्लो ७४

एवं रघूणां चरितमुद्गातुं प्रवृत्तोऽसौ कविकोकिलः, श्रीरामभद्रस्यापदानं रामायणादन्येषां वृत्तं पुराणेभ्यश्चावगत्य पूर्वसूरिभिरवलम्बितं पन्थानमाश्रित्य निरर्गलगतिः रसभावनिरन्तरया वाण्यात्मानं विनोदयन्, तद्गीतश्रवणैकाग्रान्रसिकानानन्दयन्, अनपायिपदोपलब्ध्युपायभूतानात्मगुणाधायकान्धर्मानुपदिशन्, अपाञ्चभौतिकेनामलेन यशःकायेन जीवन् भारतवर्षमद्याप्यलंकरोति ॥



# शुद्धपत्रिका ।

| पृष्ठसंख्या. | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| १ | ३ | विदिततरैव |
| ३ | ५ | सर्वपर्थान |
| ५ | १ | ष्वन्यतममप्र |
| १७ | १५ | अद्भुतरस |
| १८ | ९ | रनुकूलदं |
| २५ | १० | उपालभत इव |
| ३० | १५ | कुर्वन्त प्रति |
| ३० | १६ | उदीरयन्त प्रति |
| ३७ | १९ | दशावधिना |
| ४८ | १० | ब्रवीतीत्येतत् |
| ५३ | १३ | दुःखसुखीभूय स्वसुख |
| ५७ | ७ | निर्वासितामपि |
| ८२ | १७ | चैतन्यं |
| ९१ | १४ | दाशरथी |
| १०१ | २ | ग्रथिताभिर्मधुमय |
| १२८ | ६ | दुःखेनाविष्टा |
| १२८ | १९ | त्रयोविंशत्यधिक |
| १४१ | ७ | महोदधिः |
| १४१ | ९ | प्रमदामिव यत्नेन भूपि |
| १४३ | ६ | यशःकायेन |